केन विनिर्माति रथं रथकारः कीदृशी च शूर्पणखा[1] ।
वक्तुमिहोत्तरमेकं० ॥ ९५ ॥

॥ दारुणा[2] ॥ ७ ॥

केनेति । अत्र तृतीयानपुंसकलिङ्गाभ्यामेकः प्रश्नः । प्रथमास्त्रीलिङ्गाभ्यामन्यः । तयोः दारुणा इत्युत्तरम् । एकत्र दारुणा काष्ठेन । अन्यत्र भीषणा ॥

हृष्टा जनता कीदृङ् मासेन हिमं विकीर्यते केन ।
वक्तुमिहोत्तरमेकं० ॥ ९६ ॥

॥ सहसा ॥ ८ ॥

हृष्टेति । अत्र प्रथमास्त्रीलिङ्गाभ्यां कश्चित् प्रश्नः । तृतीयापुंलिङ्गाभ्यामन्यः । तयोः सहसा इत्युत्तरम् । एकत्र हसेन हासेन सहिता । अन्यत्र सहसा सहोमासेन ॥

साधोर्वाणी कीदृक् केन पुनः प्राप्यते यशः पुंसा ।
वक्तुमिहोत्तरमेकं० ॥ ९७ ॥

॥ अपरुषा ॥ ९ ॥

साधोरिति । अत्र प्रथमास्त्रीलिङ्गाभ्यां कश्चित् प्रश्नः । तृतीयापुंलिङ्गाभ्यामन्यः । तयोः अपरुषा इत्युत्तरम् । एकत्र परुषा न भवतीत्यपरुषा । अन्यत्र अपगता रुड् यस्य सः तेन ॥

---

१. 'खी' ख. च.  २. 'सुदारुणा' क. ग.

तरुणी चकास्ति कीदृक् सेना[1] केनाभिपालिता जयति ।
वक्तुमिहोत्तरमेकं ॥ ९८ ॥

॥ सुनेत्रा ॥ १० ॥

तरुणीति । अत्र प्रथमास्त्रीलिङ्गाभ्यां कश्चित् प्रश्नः । तृतीयापुल्लिङ्गाभ्यामन्यः । तयोः सुनेत्रा इत्युत्तरम् । एकत्र शोभननेत्रा सुदृगित्यर्थः । अन्यत्र शोभननायकेन ॥

लिङ्गवचनभिन्नं यथा —

पाणिर्विलासिनीनां मध्यभुवश्चापि कीदृशस्तासाम् ।
वक्तुमिहोत्तरमेकं० ॥ ९९ ॥

॥ सवलयः ॥ १ ॥

इदमेकरूपप्रश्नं[2] च । कीदृश इति[3] पदस्य पुल्लिङ्गैकवचनस्त्रीलिङ्गबहुवचनरूपत्वात्[4] ।

अथ लिङ्गवचनभिन्नमुदाहरति — पाणिरिति । अत्र विलासिनीनां पाणिः कीदृशः । अत्राकारान्तोऽयं शब्दः पुल्लिङ्गश्चैकवचनान्तश्च । तासां मध्यभुवश्च कीदृश इति शकारान्तोऽयं शब्दो बहुवचनान्तः स्त्रीलिङ्गश्च । एवंविधयोः प्रश्नयोः सवलय इत्युत्तरम् । एकत्र वलयैः सहितः सवलयः

---

१. ‘ भूमिः केना ’ ख. ‘ मैनाकेनाभि ’ च.

२. ‘ प्रश्नपदं च ’ ख. च.  ३. ‘ इत्यस्य पुंस्येकवचने स्त्रियां बहुवचने चैकरूपत्वात् । दावप्लुष्ट० ’ ख. च.

४. ‘ परत्वत् ’ ग.

इति पुल्लिङ्गैकवचनम् । अन्यत्र वलिभिः सहिता इति स्त्रीलिङ्गबहुवचनम् । अत्र कीदृश इति प्रश्नपदस्याप्येकरूपत्वं विशेषः ॥

*कीदृश्यः स्वैरिण्यः कीदृक् च विभाति नन्दनोद्देशः ।
वक्तुमिहोत्तरमेकं० ॥ १०० ॥

॥ ससुरतरुचयः ॥ २ ॥

दावप्लुष्टमरण्यं कीदृक् के दुर्बलाश्चतुष्पात्सु ।
वक्तुमिहोत्तरमेकं० ॥ १०१ ॥

॥ अवयः ॥ ३ ॥

दावेति । अत्र नपुंसकैकवचनाभ्यां कश्चित् प्रश्नः । पुल्लिङ्गबहुवचनाभ्यामन्यः । तयोः अवयः इत्युत्तरम् । एकत्र अवयः वयोभिः पक्षिभिर्विरहितम् । अन्यत्र अवयः अविशब्दे बहुवचनम् ॥

कीदृश्यः सारभुवः कीदृक् क्षोणीपतिश्च नीतिपरः ।
वक्तुमिहोत्तरमेकं० ॥ १०२ ॥

॥ बहुसुखनयः ॥ ४ ॥

कीदृश्य इति । अत्र स्त्रीलिङ्गबहुवचनाभ्यां कश्चित् प्रश्नः । पुल्लिङ्गैकवचनाभ्यामन्यः । एकत्र शोभनाः खनयः सुखनयः । बह्व्यः सुखनयो यासु तास्तथोक्ताः । अन्यत्र सुखानि नयाश्च सुखनयाः । बहवः सुखनया यस्य स तथोक्तः ॥

---

* मातृकायामस्य पद्यस्य व्याख्या नास्ति ।

**कोऽधारि त्रिपुरभिदा भान्ति सभा रक्षसां च कीदृश्यः ।**
**वक्तुमिहोत्तरमेकं० ॥ १०३ ॥**

**॥ भीष्मसूरयः ॥ ५ ॥**

**क** इति । अत्र पुल्लिङ्गैकवचनाभ्यां कश्चित् प्रश्नः । स्त्रीलिङ्गबहुवचनाभ्यामन्यः । तयोर्भीष्मसूरय इत्युत्तरम् । एकत्र भीष्मसूरयः गङ्गावेगः । अन्यत्र भीष्माः सूरयो यासु ताः ॥

**निबिडानि कानि तरुभिः सम्बुद्धिः का पुनर्महाटव्याः ।**
**वक्तुमिहोत्तरमेकं० ॥ १०४ ॥**

**॥ अरण्यानि ॥ ६ ॥**

**निबिडानी**ति । अत्र नपुंसकलिङ्गबहुवचनाभ्यां कश्चित् प्रश्नः । संम्बोधनप्रथमैकवचनाभ्यामन्यः । तयोः अरण्यानि इत्युत्तरम् । एकत्र अरण्यशब्दबहुवचनम् । अन्यत्र अरण्यानीशब्दसम्बुद्धिः ॥

**राक्षसराजः कीदृक् पुराणपुष्पच्छटाश्च कीदृश्यः ।**
**वक्तुमिहोत्तरमेकं० ॥ १०५ ॥**

**॥ असुरभयः ॥ ७ ॥**

**राक्षसराज** इति । अत्र पुंल्लिङ्गैकवचनाभ्यामेकः प्रश्नः । स्त्रीलिङ्गबहुवचनाभ्यामन्यः । तयोः असुरभय इत्युत्तरम् । एकत्र सुरेभ्यो भयं सुरभयम् । तत्र विद्यते यस्य सः । अन्यत्र सुरभयो न भवन्तीति असुरभयः ॥

कमलैर्विराजते का कथ्येते कथमपां तथाधारौ ।
वक्तुमिहोत्तरमेकं० ॥ १०६ ॥

॥ सरसी ॥ ८ ॥

कमलैरिति । अत्र स्त्रीलिङ्गैकवचनाभ्यां कश्चित् प्रश्नः । नपुंसकलिङ्गद्विवचनाभ्यामन्यः । तयोः सरसी इत्युत्तरम् । एकत्र सरसी इति ईकारान्तम् । अन्यत्र सकारान्तं द्विवचनम् ॥

कीदृंशि शशिमहांसि प्रालेयचयस्य का च सम्बुद्धिः ।
वक्तुमिहोत्तरमेकं० ॥ १०७ ॥

॥ हिमानि[1] ॥ ९ ॥

कीदृंशीति । अत्र नपुंसकलिङ्गबहुवचनाभ्यां कश्चित् प्रश्नः । स्त्रीलिङ्गैकवचनाभ्यामन्यः । तयोर्हिमानि इत्युत्तरम् । एकत्र हिमशब्दाद् बहुवचनम् । अन्यत्र हिमानीशब्दात् सम्बुद्धिः* ॥

कलकण्ठमिथुनसङ्गः कीदृक्षः कीदृशोऽभ्रसीमानः ।
वक्तुमिहोत्तरमेकं० ॥ १०८ ॥

॥ समरुतः ॥ १० ॥

---

* सम्बुद्धिः । जायत इति । अत्र स्त्रीलिङ्गबहुवचनाभ्यां कश्चित् प्रश्नः । पुल्लिङ्गैकवचनाभ्यामन्यः । तयोः विद्युद्रुचय इत्युत्तरम् । एकत्र विद्युतां रुचयः । अन्यत्र विगतो द्युद्रुचयः स्वर्द्रुसमूहो यस्य स तथोक्तः ॥" व्याख्येयं मातृकायां दृश्यते । अस्या मूलश्लोकः कुत्रापि ग्रन्थे नास्ति ।

---

१. 'नि ॥ कीदृश्यः स्वैरिण्यः०' ख. ग. च.

कलकण्ठेति । अत्र पुंलिङ्गैकवचनाभ्यां कश्चित् प्रश्नः । स्त्रीलिङ्गबहुवचनाभ्यामन्यः । एकत्र समं रुतं यस्य सः तथोक्तः । अन्यत्र समरुताः सर्वावयवाः ॥

विभक्तिवचन[1]रूपस्य सङ्कीर्णस्य हलन्तेषु बहुत्वान्नोदाहृतम् । यथा—सरितः मरुतः मधुलिहः जलमुचः । एतेषां प्रथमाबहुवचनस्य षष्ठ्येकवचनस्य च तुल्यत्वात् ।

लिङ्ग[2]वचनविभक्तिभिन्नं यथा—

केषां पङ्कजशोभा धूर्तजनः कीदृशीं वधूमिच्छेत् ।
वक्तुमिहोत्तरमेकं० ॥ १०९ ॥

॥ सरसाम्[3] ॥ १ ॥

अथ विभक्तिलिङ्गवचनभिन्नम् उदाहरति— केषामिति । अत्र षष्ठीनपुंसकलिङ्गबहुवचनेन कश्चित् प्रश्नोऽभिहितः । द्वितीयास्त्रीलिङ्गैकवचनैरन्यः । तयोः सरसामित्येकमुत्तरम् । एकत्र सरसां पद्माकराणाम् । अन्यत्र सरसां शृङ्गाररसविशिष्टाम् ॥

कस्याः क्रौर्यं प्रार्थितं के वा न विदन्ति सज्जनमहत्त्वम् ।
वक्तुमिहोत्तरमेकं० ॥ ११० ॥

॥ नार्याः ॥ २ ॥

कस्या इति । अत्र षष्ठीस्त्रीलिङ्गैकवचनैः भिन्नः कश्चित् प्रश्नः । प्रथमापुंलिङ्गबहुवचनैरन्यः । तयोर्नार्या इत्युत्तरम् । एकत्र नार्याः स्त्रियाः ।

---

१. 'नभेदरूपस्य हल' ख. 'नभेदरूपस्य सङ्कीर्णस्य हल' घ.

२. 'अथ विभक्तिलिङ्गवचनभिन्नं' ग.

३. 'साम् ॥ रक्षन्तीन्द्र० ॥ कस्याः क्रौर्यं० ॥ केषां रात्रौ० ग.' ॥

अन्यत्र आर्या न भवन्तीति नार्याः ॥

रक्षन्तीन्द्रप्रमुखाः काः [1]प्रावृट्पुष्पितो द्रुमः कः स्यात् ॥
वक्तुमिहोत्तरमेकं० ॥ १११ ॥

॥ ककुभः[2] ॥ ३ ॥

रक्षन्तीति । अत्र द्वितीयास्त्रीलिङ्गबहुवचनैर्भिन्नः कश्चित प्रश्नः । प्रथमापुल्लिङ्गैकवचनैरन्यः । तयोः ककुभ इत्युत्तरम् । एकत्र ककुभः दिशः । अन्यत्र अर्जुनवृक्षः ॥

केषां रात्रौ [3]वृद्धिः कां वा पापापहां वदन्ति नदीम् ।
वक्तुमिहोत्तरमेकं० ॥ ११२ ॥

॥ तमसाम् ॥ ४ ॥

केषामिति । अत्र षष्ठीनपुंसकलिङ्गबहुवचनैः भिन्नः कश्चित् प्रश्नः । द्वितीयास्त्रीलिङ्गैकवचनैरन्यः । तयोः तमसामित्युत्तरम् । एकत्र अन्धकाराणाम् । अन्यत्र तमसाख्यां नदीम् ॥

कस्याश्चक्षुर्विपुलं सत्पुरुषाः कीदृशा भवन्ति भुवि ।
वक्तुमिहोत्तरमेकं० ॥ ११३ ॥*

॥ मृग्याः ॥ ५ ॥

---

* ११३–११४ तमश्लोकयोर्व्याख्या मातृकायां नास्ति ।

---

१. ' प्रावृषि पुष्पितो ' ख. ग. च.

२. ' भः ॥ कस्याश्चक्षु० । केषां रात्रौ० ' ख. च.

३. ' रात्र्यां ' च.

[कस्या इति । अत्र षष्ठीस्त्रीलिङ्गैकवचनैः भिन्नः कश्चित् प्रश्नः । प्रथमापुंलिङ्गबहुवचनैः अन्यः । तयोर्मृग्या इत्युत्तरम् । एकत्र हरिण्याः । अन्यत्र अन्वेषणीयाः ॥]

**शाद्वलदेशः कीदृग् व्याप्नोति च सज्जनस्य कीर्तिः काः ।**
**वक्तुमिहोत्तरमेकं० ॥ ११४ ॥**

**॥ हरितः ॥ ६ ॥**

[शाद्वलेति । अत्र प्रथमापुंलिङ्गैकवचनैः कश्चित् प्रश्नः । द्वितीयास्त्रीलिङ्गबहुवचनैः अन्यः । तयोर्हरित इत्युत्तरम् । एकत्र हरितः श्यामलः । अन्यत्र हरितः दिशः ॥]

**शेषः केषामधिभूरखिलगुणैः कीदृशीं रमामाहुः ।**
**वक्तुमिहोत्तरमेकं० ॥ ११५ ॥**

**॥ अहीनाम् ॥ ७ ॥**

शेष इति । अत्र षष्ठीपुंलिङ्गैकवचनैः भिन्नः कश्चित् प्रश्नः । द्वितीयास्त्रीलिङ्गैकवचनैः अन्यः । तयोरहीनामित्युत्तरम् । एकत्र अहीनां सर्पाणाम् । अन्यत्र अहीनामविरहिताम् ॥

**कस्याः सर्वसहता काननसञ्चारकातराः के वा ।**
**वक्तुमिहोत्तरमेकं० ॥ ११६ ॥**

**॥ अवन्याः ॥ ८ ॥**

कस्या इति । अत्र षष्ठीस्त्रीलिङ्गैकवचनैः भिन्नः कश्चित् प्रश्नः । प्रथमापुंलिङ्गबहुवचनैरन्यः । तयोरवन्याः इत्युत्तरम् । एकत्र अवन्याः भूमेः । अन्यत्र वन्या न भवन्तीत्यवन्याः ॥

गृह्णन्ति चापलतिका योद्धारः कीदृशीरसन् कीदृक् ।
वक्तुमिहोत्तरमेकं० ॥ ११७ ॥

॥ खरपरुषः[1] ॥ ९ ॥

गृह्णन्तीति । अत्र द्वितीयास्त्रीलिङ्गबहुवचनैर्भिन्नः कश्चित् प्रश्नः । प्रथमापुंलिङ्गबहुवचनैरन्यः । तयोः खरपरुष इत्युत्तरम् । एकत्र खराणि परूंषि यासां ताः । अन्यत्र खर इव परुषः ॥

के विलसन्ति निशायां ग्रहाः सुखं नायकस्य कस्याः स्यात् ।
वक्तुमिहोत्तरमेकं० ॥ ११८ ॥

॥ चन्द्रमुख्याः ॥ १० ॥

क इति । अत्र प्रथमापुलिङ्गबहुवचनैः भिन्नः कश्चित् प्रश्नः । पञ्चमीस्त्रीलिङ्गैकवचनैरन्यः । तयोः चन्द्रमुख्या इत्येकमुत्तरम् । एकत्र चन्द्रमुख्या चन्द्रप्रमुखाः । अन्यत्र चन्द्रमुख्याः इन्दुवदनायाः स्त्रिया इत्यर्थः ॥

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा चाजनयत् सतीजननुता यं मानितं सज्जनैः ।
तस्याभूत् प्रथमः कृताविह परिच्छेदः सभारञ्जकः
शब्दालङ्कृतिधोरणीसमुदितः श्रीचित्ररत्नाकरे ॥

इति[2] प्रथमः परिच्छेदः ॥

---

१. " षः ॥ मुखतः केषां प्रभवो भुवने कां वा, *तनुं दहति जनः वक्तुमिहोत्तरमेकं० ' ॥ विप्राणाम् ॥ के विलसन्ति० । ' ख. च.
२. इति चक्रकविकृतिषु चित्ररत्नाकरे अयं प्रथमः परिच्छेदः ।

---

* ' तनुं दहन्ति जनाः ' च.

## द्वितीयः परिच्छेदः ।

**प्रतिलोमानुलोमाभ्यां यदि स्यादुत्तरद्वयम् ।**
**[1]प्रश्नयोरुभयोः प्राहुस्तद् द्विरूपोत्तरं बुधाः ॥ १ ॥**

अथ प्रतिलोमानुलोमाख्यं चित्रम् । तद् द्विरूपोत्तरम् एकरूपोत्तरं चेति द्विविधम् । तत्र प्रथमं द्विरूपोत्तरलक्षणमाह– **प्रतिलोमेति** । उभयोः प्रश्नयोः प्रतिलोमानुलोमाभ्यामुत्तरद्वयं स्याद् यदि तद् बुधा द्विरूपोत्तरमाहुः ॥

**वर्णैर्द्वित्रिचतुःपञ्चषट्सप्तक्रमसंयुतैः ।**
**[2]ग्रथ्यन्ते ह्युत्तराणीह पञ्चश्लोकैः पृथक् पृथक् ॥ २ ॥**

कतिभिरक्षरैरुत्तराणि ग्रथ्यन्ते तानि च कतीत्याकाङ्क्षायामाह— **वर्णैरिति** । द्वित्रिचतुःपञ्चषट्सप्तरूपक्रमसंयुतैर्वर्णैर्ग्रथितान्युत्तराणि । एकस्य वर्णस्यानुलोम्ये प्रातिलोम्ये च चमत्कारो नास्तीति तदुपेक्ष्य वर्णद्वयमारभ्य सप्तवर्णपर्यन्तं वर्णानुलोम्यप्रातिलोम्याभ्यां ग्रथ्यन्ते । तानि च द्व्यादिसङ्ख्यासु पृथक् पृथक् प्रत्येकं पञ्चसङ्ख्याकानि सम्भूय त्रिंशत्सङ्ख्याकानि भवन्ति ॥

**तद्यथा—**

**कया विराजते रत्नं कीदृशं युवतेर्वपुः ।**
**प्रतिलोमानुलोमाभ्यां [3]प्रश्नयोरुत्तरे वदेत् ॥ ३ ॥**

---

१. ‘ तद् द्विरूपोत्तरं प्राहुः प्रश्नयोरुभयोर्बुधाः । ’ ख. च.

२. ‘ गृह्यन्ते ’ च.            ३. ‘ प्रश्नयोरेकमुत्तरम् ’ ख.

॥ रुचा, चारु ॥ १ ॥

उदाहरति– तद्यथेति । कयेति । रत्नं कया विराजत इत्येकः प्रश्नः । युवतेर्वपुः कीदृशमित्यपरः । तत्र प्रथमस्य रुचेत्युत्तरं, द्वितीयस्य तत्प्रातिलोम्येन चारु इत्युत्तरम् । अत्र 'प्रतिलोमानुलोमाभ्यां प्रश्नयोरुत्तरे वदेद्' इति त्रिंशत्सङ्ख्याकानां द्विरूपोत्तरलक्ष्यश्लोकानामिदमेवोत्तरार्धम् ॥

मध्येसमुद्रमास्ते का कमसूत दिवाकरः ।
प्रतिलोमा० ॥ ४ ॥

॥ लंका, कालं ॥ २ ॥

मध्य इति । प्रश्नौ स्पष्टौ । लंका कालं इति क्रमादुत्तरे ॥

कुत्रास्ते बन्धुभिः सार्धं भुक्तिः का बर्हिणां मुखे ।
प्रतिलोमा० ॥ ५ ॥

॥ काके, केका ॥ ३ ॥

भयाकुलः कं भजते गजाः[1] परिहरन्ति कम्[2] ।
प्रतिलोमा० ॥ ६ ॥

॥ कंपं, पंकं ॥ ४ ॥

का हेमकान्तिं वहते धत्ते कं वरुणः करे ।
प्रतिलोमा० ॥ ७ ॥

---

१. 'नागाः' ख. च.    २. 'किम्' ख.

॥ शंपा, पाशं ॥ ५ ॥

केति । प्रश्नौ स्पष्टौ । उत्तरे शंपा पाशं इति ॥

अथ त्रिवर्णोत्तरम्—

आस्ते कस्मिन् मुखे शोभा चत्वार्यङ्गानि कासु च ।
प्रतिलोमा० ॥ ८ ॥

॥ सुनासे, सेनासु ॥ १ ॥

अकृत्रिमं किं कचस्य कृत्रिमं भूषणं च किम् ।
प्रतिलोमा० ॥ ९ ॥

॥ [1]कालिमा, मालिका ॥ २ ॥

क कच्छजत्वं पाषाणाः सिन्धौ कस्मै कपीरिताः ।
प्रतिलोमा० ॥ १० ॥

॥ वेतसे, सेतवे ॥ ३ ॥

का स्यान्मग्ना चक्रतनुर्वेश्या कस्मै स्पृहावती ।
प्रतिलोमा० ॥ ११ ॥

॥ नेमिका, कामिने ॥ ४ ॥

केति । प्रश्नौ स्पष्टौ । उत्तरे- नेमिका, कामिने ॥

---

१. 'काळिमा माळिका । ळडयोरभेदः' ग.

भुवनं सृज्यते केन दाता कस्मै धनं दिशेत् ।
प्रतिलोमा० ॥ १२ ॥

॥ वेधसा, साधवे ॥ ५ ॥

भुवनमिति । प्रश्नौ स्पष्टौ । उत्तरे—वेधसा, साधवे ॥

अथ चतुर्वर्णोत्तरम्—

प्रवहत्युपविन्ध्यं का कुत्र देहीति भाषणम् ।
प्रतिलोमा० ॥ १३ ॥

॥ रेवानदी, दीनवारे ॥ १ ॥

प्रहवतीति । प्रश्नौ स्पष्टौ । उत्तरे-रेवानदी, दीनवारे दीनसमूहे । 'वारसङ्घातसञ्चयाः' इत्यमरः ॥

पीतासवा कीदृशी स्याद् रामः किमिषुणाभिनत् ।
प्रतिलोमा० ॥ १४ ॥

॥ मदालसा, सालदाम ॥ २ ॥

अथ चतुर्वर्णोत्तरम्- पीतासवेति । प्रश्नौ स्पष्टौ । उत्तरे मदालसा, सालदाम ॥

अहारि केन भूभारो भूयते कीदृशा स्त्रिया ।
प्रतिलोमा० ॥ १५ ॥

॥ यादवेन, नवेदया ॥ ३ ॥

अहारीति । प्रश्नौ स्पष्टौ । उत्तरे– यादवेन कृष्णेन । नवदेया वेद-रहितया ॥

[1]के काननस्य सम्बुद्धी सम्बुद्धिः का च वाग्मिनः ।
प्रतिलोमा० ॥ १६ ॥

॥ दव दाव, वदावद ॥ ४ ॥

के इति । काननस्य वनस्य के सम्बुद्धी । अन्यः प्रश्नः स्पष्टः । दव, दाव इत्येते वनसम्बुद्धी । वदावद इति द्वितीयमुत्तरम् ॥

जिता कया वनच्छाया राजपुत्री च कीदृशी ।
प्रतिलोमा० ॥ १७ ॥

॥ [2]काळीभासा, साभाळीका ॥ ५ ॥

जितेति । प्रश्नौ स्पष्टौ । उत्तरे– काळीभासा, साभाळीका ।

अथ पञ्चवर्णोत्तरम्—

[3]कस्मिन् सति वनी कीदृक् स्यात् कृतं केन भारतम् ।
प्रतिलोमा० ॥ १८ ॥

॥ न सेव्या दवे, वेदव्यासेन ॥ १ ॥

अथ पञ्चवर्णोत्तरम्– कस्मिन्निति । प्रश्नौ स्पष्टौ । उत्तरे न सेव्या दवे, दवे वनाग्नौ सति । 'दवदावौ वनानलौ' इत्यमरः । वेदव्यासेनेत्यपरम् ॥

---

१. 'का काननाग्नेः सम्बुद्धिः' ख, च.
२. 'कालिभासा, साभालिका' ग च. 'काळभासा, साभाळका' ख.
३. 'कस्मिंस्थिते वनी' च.

[1]चरतीन्दुः कीदृशे खे कीदृग् भृत्यावली [2]प्रभौ ।
प्रतिलोमा० ॥ १९ ॥

॥ तारनिवासे, सेवानिरता ॥ २ ॥

चरतीति । प्रश्नौ स्पष्टौ । उत्तरे– तारनिवासे, सेवानिरता ॥

अबाणः किं वदेद् धन्वी कीदृग् गाधिजधीरभूत् ।
प्रतिलोमा० ॥ २० ॥

॥ [3]नालीका न मे, मेनकालीना ॥ ३ ॥

अबाण इति । प्रश्नौ स्पष्टौ । उत्तरे– नालीका न मे, मेनकालीना ॥

सुरभिः का भर्जितै[4]ली न रागः कासु कामिनाम् ।
प्रतिलोमा० ॥ २१ ॥

॥ सुकाळशाका, काशाळकासु ॥ ४ ॥

(सुरभिः)केति । प्रश्नौ स्पष्टौ । उत्तरे– सुकाळशाका, काशाळकासु ॥

वनीषु कीदृक्षु मृगाः कीदृग् गन्धर्वसंहतिः ।
प्रतिलोमा० ॥ २२ ॥

॥ सारनगासु, सुगानरसा ॥ ५ ॥

वनीष्विति । प्रश्नौ स्पष्टौ । उत्तरे– सारनगासु, सुगानरसा ॥

---

१. 'विशतीन्दुः' ख. च. २. 'बभौ' ख. ग.
३. 'नाळीका न मे, मेनकाळीना । लळयोरभेदः' ग.
४. 'तालिः' ख. च.

**अथ षड्वर्णोत्तरम्—**

**कीदृश्यौ मधुमत्यास्थ्योः सम्बुद्धी कीदृशी सिता ।**
**प्रतिलोमा० ॥ २३ ॥**

**॥ सारघ नरास्थि, स्थिरानघरसा ॥ १ ॥**

अथ षड्वर्णोत्तरम्— **कीदृश्याविति** । प्रश्नौ स्पष्टौ । उत्तरे— सारघ नरास्थि, स्थिरानघरसा ॥

**का कीदृक् कं ज्ञापयितुं निशि का रावणालये ।**
**प्रतिलोमा० ॥ २४ ॥**

**॥ तारकालं कालं, लंकालंकारता ॥ २ ॥**

**केति** । निशि कं ज्ञापयितुं का कीदृग् भवतीत्येकः प्रश्नः । रावणालये केत्यन्यः । तारकालं कालमित्येकमुत्तरम् । अश्विन्यादितारका कालं ज्ञापयितुमलम् । उच्चस्थतारकादर्शनेन कालज्ञानं भवति । लंकालंकारता इत्यन्यत् ॥

**धारागृहार्यसम्बुद्धी के कीदृक् का हरेः प्रिया ।**
**प्रतिलोमा० ॥ २५ ॥**

**॥ धारागारानघ, घनरागा राधा ॥ ३ ॥**

**धारेति** । धारागृहस्य आर्यस्य च सम्बुद्धी के इत्येकः प्रश्नः । तत्र धारागार अनघ इत्येकमुत्तरम् । घनरागा राधेत्यपरमुत्तरम् ॥

**वनस्त्रियोः के सम्बुद्धी के स्तुतस्वनवाग्मिनोः ।**
**प्रतिलोमा० ॥ २६ ॥**

॥ दव, वरतनु । नुतरव वद ॥ ४ ॥

**वने**ति । वनस्य स्त्रियाश्च सम्बुद्धी के इत्येकः प्रश्नः । स्तुतध्वनेः वाग्मिनश्च के सम्बुद्धी । दव वरतनु इत्येकमुत्तरम् । नुतरव वदेत्यपरम् ॥

गौणी का ताक्ष्यंसम्बुद्धिः कीदृक् सुभटमण्डलम् ।
प्रतिलोमा० ॥ २७ ॥

॥ जिताहिसाहस, सहसाहिताजि ॥ ५ ॥

**गौणी**ति । गुणादागता ताक्ष्यंसम्बुद्धिः का इत्येकः प्रश्नः । अन्यः स्पष्टः । तत्र जिताहिसाहसेत्येकमुत्तरम् । सहसाहिताजि इत्यन्यत् ॥

अथ सप्तवर्णोत्तरम्—

कृष्णपक्षनिशा कीदृक् कीदृग् युवतिसंहतिः ।
प्रतिलोमा० ॥ २८ ॥

॥ तारनिवहरामा, माराहवनिरता ॥ १ ॥

अथ सप्तवर्णोत्तरम्- **कृष्णे**ति । प्रश्नौ स्पष्टौ । उत्तरे- तारनिवहरामा, माराहवनिरता ॥

मुखपूर्णेन्दुभिः [1]स्त्रैणे का स्यात् का कीदृशी भवेत् ।
प्रतिलोमा० ॥ २९ ॥

॥ राकाजालाकारता, तारका लाजाकारा ॥ २ ॥

**मुखे**ति । मुखपूर्णेन्दुभिः स्त्रैणे स्त्रीसमूहे का स्यादित्येकः प्रश्नः ।

---

१. 'स्त्रीणां' ख. च.

का कीदृशी स्यादित्यन्यः । उत्तरे— राकाजालाकारता इत्येकमुत्तरम् । तारका जालाकारा इत्यन्यः ॥

गौणी का ग्रीष्मसम्बुद्धिः कीदृशं विफलं[1] वनम् ।
प्रतिलोमा० ॥ ३० ॥

॥ पिकरुतदमन[2], नमदतरुकपि[3] ॥ ३ ॥

गौणीति । गुणत आगता ग्रीष्मसम्बुद्धिः का इत्येकः प्रश्नः । विफलं वनं कीदृशमित्यपरः । तयोः पिकरुतदमनेति प्रथमस्योत्तरम् । नमदतरुकपि इति द्वितीयस्योत्तरम् ॥

किं कीदृशं शरत्काले सम्बुद्धिः काल्पदन्तिनः ।
प्रतिलोमा० ॥ ३१ ॥

॥ जगदमलरवि, विरलमदगज ॥ ४ ॥

किमिति । शरत्काले किं कीदृशं भवतीत्येकः प्रश्नः । अल्पदन्तिनः पुंसः का सम्बुद्धिरिति द्वितीयः । तयोरेकस्य जगदमलरवि इत्युत्तरम् । विरलमदगजेत्यन्यदुत्तरम् ॥

कृष्णपक्षक्षपा कीदृगूर्जे राधा च कीदृशी ।
प्रतिलोमा० ॥ ३२ ॥

॥ तारकरदायामा, मायादारकरता ॥ ५ ॥

अथैकरूपोत्तरम्—

---

1. 'विपुलं' ख. 2. 'मनि, निमदतरुकपि' ग.
3. 'पि ॥ अथैकरूपोत्तरम्—' ख.

प्रतिलोमानुलोमाभ्यां सरूपं चेदिहोत्तरम् ।
प्रश्नस्यैकस्य तत् प्राहुरेकरूपोत्तरं बुधाः ॥ ३३ ॥

वर्णैर्द्वित्रिचतुःपञ्चषट्सप्तक्रमसंयुतैः ।
पृथक्पृथङ् नव नव प्रोच्यन्तेऽत्रोत्तराणि हि ॥ ३४ ॥

तद्यथा

कलयामास कं सभ्यं विराटधरणीपतिः ।
प्रतिलोमानुलोमाभ्यामेकरूपमिहोत्तरम् ॥ ३५ ॥

॥ कंकं ॥ १ ॥

अथैकरूपाख्यं चित्रं कथ्यते । तस्य लक्षणमाह– **प्रतिलोमेति ।** अत्रैकमेव प्रश्नस्योत्तरं प्रतिलोमानुलोमाभ्यां सरूपं समानरूपं चेत् तच्चित्रं बुधा एकरूपोत्तरं प्राहुः । कियत्सङ्ख्याकैर्वर्णैरुत्तराणि ग्रथ्यन्ते इत्यत आह– **वर्णै-रिति ।** एकवर्णरूपोत्तराणां गौर्भूरित्यादीनामानुलोम्ये प्रातिलोम्ये च एकाकारत्वे न चमत्कारः द्व्यादिसङ्ख्यानां वर्णानामानुलोम्यप्रातिलोम्ययोरेकरूपत्वे चमत्कारोऽस्तीत्युक्तं– द्वित्रीति । द्विसङ्ख्यामारभ्य सप्तसङ्ख्यापर्यन्तं क्रमाद् वर्धितैर्वर्णैरुत्तराणि ग्रथ्यन्ते । तानि च प्रत्येकं नवनवसङ्ख्याकानि सम्भूय चतुःपञ्चाशत्सङ्ख्याकानि । पूर्वोक्ता द्विरूपलक्ष्यश्लोका वक्ष्यमाणैकरूपोत्तर-लक्ष्यश्लोकाश्च बहिर्लापिन इति ज्ञेयम् । उदाहरति– **तद्यथेति ।** वर्णद्व्यात्मकान्येकरूपाणि नवोत्तराणि दर्शयति– **कलयामासेति ।** विराटराजः कं सभ्यं सामाजिकं कलयामास इत्येक एव प्रश्नः । तस्योत्तरं कंकमिति । तद् आनुलोम्ये प्रातिलोम्ये चैकरूपम् । 'प्रतिलोमानुलोमाभ्यामेकरूपमिहोत्तरम्' इतीदमेव चतुःपञ्चाशल्लक्ष्यश्लोकानामुत्तरार्धम् ॥

---

१. 'च्यन्ते ह्योत्तराणि' च.  २. 'कारयामास' च.

अचन्द्रिकायां शर्वर्यां कान्तरिक्षे प्रकाशते ।
प्रतिलोमा० ॥ ३६ ॥

॥ भामा ॥ २ ।

अचन्द्रिकायामिति । अत्र एक एव प्रश्नः स्पष्टः । तस्योत्तरं भामा भानामाभा इत्येकरूपम् ॥

भर्तारं स्वमतिक्रम्य कान्यं पुरुषमिच्छति ।
प्रतिलोमा[1]० ॥ ३७ ॥

॥ पापा ॥ ३ ॥

भर्तारमिति । प्रश्नः स्पष्टः । उत्तरं पापा* ॥

¶दावदग्धलतागुल्मपादपं कीदृशं वनम् ।
प्रतिलोमा० ॥ ३८ ॥

॥ विवि ॥ ४ ॥

दात्रेति । प्रश्नः स्पष्टः । उत्तरं विवि इति$ ॥

---

१. ' मा० ॥ वीणादिकस्य ' ख. च.

---

* ' पपा ॥ नीलकण्ठस्येति । प्रश्नः स्पष्टः । उत्तरं– केके इत्येकरूपम् ॥ वृद्धस्य' इति व्याख्या दृश्यते ।

¶ ' नीलकण्ठस्य ' ३८ ' वृद्धस्य० ' ३९ ' दावदग्ध ' ४० ' कस्य० ' ४१ 'वीणादिकस्य०' ४२ 'मृगस्य०' ४३ इति व्याख्यानुसारी उदाहरणक्रमः ।

$ ' इति ॥ कस्येति । जनः स्वं वस्तु कस्येदमिति पृष्टः किं वदेदिति प्रश्नः, ममेत्युत्तरम् ॥ ' इति व्याख्यया ममेत्युत्तरस्योदाहरणपद्यम् अन्यदुद्दिष्टं भाति ।

षष्ठीविभक्तावेकत्ववाचि किं पदमस्मादि ।
प्रतिलोमा० ॥ ३९ ॥

॥ मम ॥ ५ ॥

वीणादिकस्य वाद्यस्य सम्बुद्धिः क्रियते कथम् ।
प्रतिलोमा० ॥ ४० ॥

॥ तत[1] ॥ ६ ॥

वीणेति । प्रश्नः स्पष्टः । उत्तरं ततेति ॥

सम्बुद्धिः[2] कीदृशी जन्तोर्विधोरुत्सङ्गशायिनः ।
प्रतिलोमा० ॥ ४१ ॥

॥ शश ॥ ७ ॥

मृगस्येति[2] । प्रश्नः स्पष्टः । उत्तरं- शशेति ॥

याचकं प्रति किं ब्रूयाद् वचो लुब्धः पुनः पुनः ।
प्रतिलोमा० ॥ ४२ ॥

॥ नन ॥ ८ ॥

वृद्धस्य[3] च्युतदन्तस्य का भवत्यास्यरन्ध्रतः ।
प्रतिलोमा० ॥ ४३ ॥

---

१. ' नत ' च.

२. ' मृगस्य का वा सम्बुद्धिर्विधोः ' इति स्याद् व्याख्यानुसारी पाठः ।

३. ' वृद्धप्रच्युत ' च.

॥ लाला ॥ ९ ॥

वृद्धस्येति । प्रश्नः स्पष्टः । लालेति प्रतिलोमानुलोमयोरेकरूपमुत्तरम् ।

अथ त्रिवर्णोत्तरम्—

किं कान्ताजनवक्षोजस्पर्धाबद्धादरं सदा ।
प्रतिलोमा० ॥ ४४ ॥

॥ कन्दुकम्[1] ॥ १ ॥

अथ त्रिवर्णोत्तरम् । किमिति । प्रश्नः स्पष्टः । तस्य कन्दुकमित्येकरूपमुत्तरम् ॥

किं विहारपदं देवग्रामणीरमणीमणेः[2] ।
प्रतिलोमा० ॥ ४५ ॥

॥ नन्दनम् ॥ २ ॥

किमिति । प्रश्नः स्पष्टः । उत्तरं नन्दनमिति ।

पुम्भावविभ्रमे कीदृग् भवेदम्भोजलोचना ।
प्रतिलोमा० ॥ ४६ ॥

॥ सायासा ॥ ३ ॥

पुम्भावेति । प्रश्नः स्पष्टः । उत्तरं सायासेति ॥

नभस्तलं प्रावृषि का प्रच्छादयति निर्भरम् ।
प्रतिलोमा० ॥ ४७ ॥

---

१. ‘कन्तुकं’ क. ख. ग. च.    २. ‘मणे रमणी’ ख. च.

॥ काळिका ॥ ४ ॥

नभ इति । प्रश्नः स्पष्टः । उत्तरं काळिकेति ॥

किं वहन्ति नरेन्द्राणां द्वारदेशस्थिता जनाः ।
प्रतिलोमा० ॥ ४८ ॥

॥ कञ्चुकम् ॥ ५ ॥

किमिति । प्रश्नः स्पष्टः । उत्तरं कञ्चुकमिति ॥

छन्दोरूपं वहन्ती का शास्त्रार्थं वदति स्फुटम् ।
प्रतिलोमा० ॥ ४९ ॥

॥ कारिका ॥ ६ ॥

छन्द इति । प्रश्नः स्पष्टः । उत्तरं कारिकेति ॥

वात्सल्यं बिभ्रति भृशं केष्वपत्येषु मातरः ।
प्रतिलोमा० ॥ ५० ॥

॥ सुतासु ॥ ७ ॥

वात्सल्यमिति प्रश्नः स्पष्टः । उत्तरं सुतास्विति ।

कीदृशेनारविन्देन प्रीतिर्मधुलिहो भवेत् ।
प्रतिलोमा० ॥ ५१ ॥

॥ नवेन ॥ ८ ॥

---

१. 'तरां वहति सौरभ्यं धरा वर्षेण कीदृशा' ख. ग.

कीदृशेनेति । प्रश्नः स्पष्टः । उत्तरं नवेनेति ।

कङ्कणाब्जाक्षिकलशीहेम्नां सम्बुद्धयः कथम् ।
प्रतिलोमा० ॥ ५२ ॥

॥ कटक, नळिन जलज, नयन, करक, कनक ॥ १ ॥

कङ्कणेति । प्रश्नः स्पष्टः । उत्तरं कट(कमिति[1]केत्यादि ।)

अथ चतुर्वर्णोत्तरम्—

विरहार्तिविनिद्राणां कीदृशी रजनी भवेत् ।
प्रतिलोमा० ॥ ५३ ॥

॥ माससमा ॥ १ ॥

अथ प्रतिलोमानुलोमचतुर्वर्णोत्तरम् । विरहार्तीति । प्रश्नः स्पष्टः । उत्तरं माससमेति । एतत्प्रातिलोम्येऽपि माससमेत्येकरूपम् ॥

पृच्छन्तीं किं वदेच्छम्भुर्हेमाद्रिः[2] कोऽयमित्युमाम् ।
प्रतिलोमा० ॥ ५४ ॥

॥ मेरुरुमे ॥ २ ॥

पृच्छन्तीमिति । प्रश्नः स्पष्टः । उत्तरं मेरुरुमे इति ॥

हरिः कुत्रेति पृष्टस्तत्पार्श्वस्थः किं वदेज्जनः ।
प्रतिलोमा० ॥ ५५ ॥

---

१. ‘क, जलज, ख. च        २. ‘हैमाद्रिः’ च.

॥ हरिरिहि ॥ ३ ॥

हरिरिति । प्रश्नः स्पष्टः । उत्तरं हरिरिहेति ॥

फलितैः पादपैर्युक्तं काननं कीदृशं भवेत् ।
प्रतिलोमा० ॥ ५६ ॥

॥ विततवि ॥ ४ ॥

फलितैरिति । प्रश्नः स्पष्टः । उत्तरं विततवि इति ॥

सम्बुद्धिः का च देशस्य नूतनारण्यशालिनः ।
प्रतिलोमा० ॥ ५७ ॥

॥ नववन ॥ ५ ॥

सम्बुद्धिरिति । प्रश्नः स्पष्टः । उत्तरं नववनेति ॥

कुन्तिभोजस्य[1] कन्यायां भीमं कोऽजनयत् पुरा ।
प्रतिलोमा० ॥ ५८ ॥

॥ वायुयुवा ॥ ६ ॥

कुन्तिभोजस्येति । प्रश्नः स्पष्टः । उत्तरं वायुयुवेति ॥

कीदृशा भिषजा क्षिप्रं सन्निपातो निवार्यते ।
प्रतिलोमा० ॥ ५९ ॥

॥ जायुयुजा ॥ ७ ॥

---

१. 'कुन्तीभोजस्य' च

कीदृशेति । प्रश्नः स्पष्टः । उत्तरं जायुयुजेति । जायुमौषधं युङ्क्ते प्रयुङ्क्ते इति जायुयुक् । तेन रोगः क्षिप्रं निवार्यते ॥

यौवतं युवभिः कीदृग् भवेत् तन्न्यस्तदृष्टिभिः ।
प्रतिलोमा० ॥ ६० ॥

॥ नुततनु ॥ ८ ॥

यौवतमिति । प्रश्नः स्पष्टः । उत्तरं नुततनु इति ॥

कीदृशी प्रेमसम्पत्तिर्नन्दगोपव्रजे हरेः ।
प्रतिलोमा० ॥ ६१ ॥

॥ राधाधारा ॥ ९ ॥

कीदृशीति । प्रश्नः स्पष्टः । उत्तरं राधाधारेति ॥

कळं कूजन्[1] कथं लोकैः कळकण्ठः प्रशस्यते ।
प्रतिलोमा० ॥ ६२ ॥

॥ वररव ॥ १० ॥

अथ पञ्चवर्णोत्तरम्[2]—

नूलतारुण्यसहिते सम्बुद्धिः क्रियते कथम् ।
प्रतिलोमा० ॥ ६३ ॥

॥ नवयौवन ॥ १ ॥

---

१. 'गर्जन्' ख. च.          २. 'रम्— यथा नूल' ख.

नूत्नेति । नूतनतारुण्यसहिते पुरुष इत्यर्थः । सम्बुद्धिः कथं क्रियत इति प्रश्नः । नवयौवन इति अनुलोमप्रतिलोमयोरेकरूपं पञ्चवर्णात्मकमुत्तरम् ॥

काहलीनां विरावे का वर्ततेऽम्बरचुम्बिनि ।
प्रतिलोमा० ॥ ६४ ॥

॥ तारतारता ॥ २ ॥

काहलीनामिति । प्रश्नः स्पष्टः । उत्तरं तारतारतेति । अतिशयेन तारस्तारतारः तत्त्वम् ॥

मदान्धसिन्धुरघटा[1] कीदृशी स्याद्दलिव्रजे[2]।
प्रतिलोमा० ॥ ६५ ॥

॥ दानपानदा ॥ ३ ॥

मदान्धेति । प्रश्नः स्पष्टः । उत्तरं दानपानदेति ॥

उपक्रमे रतेः कीदृक् कान्तदृक् सुतनौ भवेत् ।
प्रतिलोमा० ॥ ६६ ॥

॥ नीविधाविनी ॥ ४ ॥

उपक्रम इति । प्रश्नः स्पष्टः । उत्तरं नीविधाविनीति ॥

श्रेणिका चञ्चरीकाणां कासारे कीदृशी भवेत् ।
प्रतिलोमा० ॥ ६७ ॥

---

१. 'घटी' च.
२. 'दळी' ख. च.

॥ नाळीकाळीना ॥ ५ ॥

श्रेणिकेति । प्रश्नः स्पष्टः । उत्तरं नाळीकाळीनेति । नाळीकेष्वा-ळीना ॥

कीदृशीषु वनक्षोणीष्वासते मुनयः सदा ।
प्रतिलोमा० ॥ ६८ ॥

॥ सुपादपासु ॥ ६ ॥

कीदृशीष्विति । प्रश्नः स्पष्टः । उत्तरं सुपादपास्विति ॥

प्रतिकूला क्षितिरुहां कीदृशी नियतिर्भवेत् ।
प्रतिलोमा० ॥ ६९ ॥

॥ दावदावदा ॥ ७ ॥

प्रतिकूलेति । अत्र दावदावदेत्युत्तरम् । दावो वनं दावो वनाग्निः । अत्राग्निविशेषवाचिनो दावशब्दस्य तत्सामान्ये पर्यवसानं करिकळभवत् ॥

विदार्यन्ते शरीराणि प्राणिनां केन सङ्गरे ।
प्रतिलोमा० ॥ ७० ॥

॥ सायकायसा ॥ ८ ॥

विदार्यन्त इति । प्रश्नः स्पष्टः । उत्तरं– सायकायसेति । सायकस्य अयः शल्यरूपं तेन ॥

कामयन्ते स्म कं बालं निखिला व्रजयोषितः ।
प्रतिलोमा० ॥ ७१ ॥

---

१. 'भटानां' क. २. 'कमज' ख.

॥ नन्दनन्दनम्[1] ॥ ९ ॥

कामयन्त इति । प्रश्नः स्पष्टः । उत्तरं- नन्दनन्दनमिति ॥

बृंहितैर्हेषितैर्युक्ता वाहिनी कीदृशी भवेत् ।
प्रतिलोमा० ॥ ७२ ॥

॥ वाराशिरावा ॥ १० ॥

बृंहितैरिति । प्रश्नः स्पष्टः । उत्तरं- वाराशिरावेति ।

अथ षड्वर्णोत्तरम्—

कीदृशी नाटककृतिर्महाकविविनिर्मिता ।
प्रतिलोमा० ॥ ७३ ॥

॥ सारनानारसा ॥ १ ॥

अथ वर्णषट्कोत्तरम् । कीदृशीति । स्पष्टः प्रश्नः । उत्तरं—सारनानारसेति ॥

[2]निम्बवृक्षाटवीच्छन्नकामिनी कीदृशी भवेत् ।
प्रतिलोमा० ॥ ७४ ॥

॥ काळकाकाळका ॥ २ ॥

निम्बेति । निम्बद्रुमवनीच्छन्नकामिनी कीदृशीति प्रश्नः । उत्तरं—काळकाकाळका । काळाः काका एवाळका यस्याः सा तथोक्ता ॥

---

१. 'नम् कीदृशी' ङ.　　२. 'निम्बभूमीरुहवनी कामिनी' ङ. च

वर्षेत् कानि मधून्युक्तिमिषात् कर्णद्वये[1] शिशुः ।
प्रतिलोमा० ॥ ७५ ॥

॥ निजाननजानि ॥ ३ ॥

वर्षेदिति । शिशुः कर्णबिले उक्तिमिषात् कीदृशानि मधूनि वर्षेदिति प्रश्नः । उत्तरं– निजाननजानि ॥

घोषभूर्नन्दगोपस्य[2] कीदृशी कृष्णदर्शने ।
प्रतिलोमा० ॥ ७६ ॥

। रामाततमारा ॥ ४ ॥

घोषभूरिति । स्फुटः प्रश्नः । उत्तरं– रामाततमारेति । रामासु ततो विस्तृतः मारो यस्याः सा तथोक्ता ॥

कीदृशं दृश्यते व्योम्नि पाण्डरं विधुमण्डलम् ।
प्रतिलोमा० ॥ ७७ ॥

॥ चारुशशरु[3]चा ॥ ५ ॥

कीदृशमिति । स्फुटः प्रश्नः । उत्तरं– चारुशशरुचा ॥

तरङ्गिणीवल्लभस्य कीदृग् वेलावनी भवेत् ।
प्रतिलोमा० ॥ ७८ ॥

---

१. 'कर्णेषु बालकाः' क. २. 'भूपस्य' ख. च.

३. 'रुचा । विहङ्गपङ्क्तया कीदृश्या प्राप्यन्ते निखिला दिशः । प्रतिलोमा० ॥ यानगगनया ॥ जनानां०' ङ.

॥ तालततलता ॥ ६ ॥

तरङ्गिणीति । प्रश्नः स्फुटः । उत्तरं– तालततलता ॥

जनानां कास्वसह्यत्वं राजन्वद्देशवर्तिनाम्[1] ।
प्रतिलोमा० ॥ ७९ ॥

॥ सुराजजरासु ॥ ७ ॥

जनानामिति । स्फुटः प्रश्नः । उत्तरं– सुराजजरासु ॥

मृतमद्यपदेशस्य सम्बुद्धिः क्रियते कथम् ।
प्रतिलोमा० ॥ ८० ॥

॥ परासुसुराप[2] ॥ ८ ॥

मृतेति । स्फुटः प्रश्नः । उत्तरं– परासुसुरापेति । परासुर्मृतः सुरापो यस्य स तथोक्तः ॥

उक्तवन्तं कविं पद्यं किं पृच्छेच्छुष्कतार्किकः ।
प्रतिलोमा० ॥ ८१ ॥

॥ कारिकाकारि का ॥ ९ ॥

उक्तवन्तामिति । स्फुटः प्रश्नः । उत्तरं – कारिकाकारि केति । कारिका अकारि का त्वयेत्यर्थः ॥

अथ सप्तवर्णोत्तरम्—

सम्बोध्य शम्भुं यक्षेन्द्रपुरीं पृच्छेदुमा कथम् ।

---

१. 'राजन् त्वद्देश' च  २. 'सुराप । सम्बोध्य' ङ.

प्रतिलोमा० ॥ ८२ ॥

॥ कालकाल कालका ॥ १ ॥

अथ वर्णसप्तकरचितानि नवोत्तराणि । **सम्बोध्येति** । उमा शम्भुं सम्बोध्य यक्षेन्द्रपुरीं कथं पृच्छेदिति प्रश्नः । उत्तरं— कालकाल कालका इति । हे कालकाल का अलकेति ॥

**समागते शरदतौ कीदृशी सरसी भवेत् ।**
**प्रतिलोमा० ॥ ८३ ॥**

॥ सारसारसारसा ॥ २ ॥

**समागत** इति । स्फुटः प्रश्नः । उत्तरं— सारसारसारसेति । अतिशयेन साराः श्लाघ्याः सारसा जलपक्षिणो यस्यां सा तथोक्ता ॥

**भक्तोऽनन्ते[1] शयानां किं [2]विश्वेशां देवतां वदेत् ।**
**प्रतिलोमा० ॥ ८४ ॥**

॥ शेषे शेषेऽशेषेश ॥ ३ ॥

**भक्त** इति । भक्तः अ(न)न्ते शयानां विश्वेशां देवतां किं वदेदिति प्रश्नः । उत्तरं— शेषे शेषेऽशेषेशे इति । फणिपतौ शेषे स्वपिषि, अशेषेशे अशेषस्य ईशा अशेषेशा, अत्र सम्बुद्धिः ॥

**संवर्तपवने वाति कीदृशी कीदृशी च भूः ।**

---

१. 'नन्तशया' ख. च. २. 'विश्वेशं खेगतो व' ख. च,

प्रतिलोमा० ॥ ८५ ॥

॥ चला चलाचला च ॥ ४ ॥

संवर्तेति । संवर्तपवने प्रळयमारुते वाति सति भूः भूमिः कीदृशी । पुनश्च कीदृशीति प्रश्नः । (उत्तरं)- चला चलाचला च इति । चला चञ्चला । चलाचला चला अचलाः शैला यस्यां सा चलाचला । च समुच्चयार्थश्चकारः ॥

कथं शिष्येभ्य आचार्यस्तपआर्जनमादिशेत्[1] ।
प्रतिलोमा० ॥ ८६ ॥

॥ तनुतनु तनुत ॥ ५ ॥

कथमिति । आचार्यः शिष्येभ्यस्तपश्चर्यां कथं समादिशेदिति प्रश्नः । उत्तरं— तनुतनु तनुत । तनुः कृशा तनुः शरीरं यथा भवति तथा तनुत कुरुध्वम् ॥

कियत्पर्यन्तमात्मार्थे काब्धिमाथे[2] कलिं व्यधात्[3] ।
प्रतिलोमा० ॥ ८७ ॥

॥ सुरासुरासुरासु ॥ ६ ॥

कियदिति । अब्धिमाथे समुद्रमथने का आत्मार्थे स्वनिमित्तं कियत्पर्यन्तं कलिं कलहं व्यधादिति प्रश्नः । उत्तरं— सुरासुरासुरासु । सुरा कर्त्री ।

---

१. 'कथं शिष्ये सदाचार्यः' ख, च., 'तपः कुरुध्वमित्याहुः कथं शिष्यांस्तपोधनाः ।' ङ. २. 'का पुराजनयत् कलिं' ङ.
३. 'मूले' ख. च.

आसुरासुरासु सुरासुराणामसुपर्यन्तम् ॥

अभ्रसीमासिताम्भोजराजिः प्रावृषि कीदृशी ।
प्रतिलोमा० ॥ ८८ ॥

॥ काळिकाळिकाळिका ॥ ७ ।

अभ्रसीमेति । अभ्रसीमैव असिताम्भोजराजिः नीलोत्पलश्रेणिः प्रावृषि कीदृशीति प्रश्नः। उत्तरं— काळिकाळिकाळिका इति । काळिकैव अळिकाळिः अळिका भृङ्गाः स्वार्थे कप्रत्ययः । आळिः पङ्क्तिः यस्याः सा काळिकाळिकाळिका । अयं भावः— आकाशसीमनीलोत्पलराजिः मेघजालभृङ्गपङ्क्तिमतीति ॥

सम्बुद्धिशब्दौ कीदृक्षौ वर्षुकाब्दाल्पपापयोः ।
प्रतिलोमा० ॥ ८९ ॥

॥ घनाघनाघनाघ ॥ ८ ॥

सम्बुद्धिशब्दाविति । वर्षुकोऽब्दः स च अल्पं पापं यस्य स च तयोः सम्बुद्धिशब्दौ कीदृक्षाविति प्रश्नः । उत्तरं— घनाघनाघनाघ इति । घनाघन, अघनाघ अल्पपाप ॥

कुबेरार्थवयोहान्योर्नामधेये च कीदृशी ।
प्रतिलोमा० ॥ ९० ॥

॥ राजराजरा जरा ॥ ९ ॥

---

१. 'दरा' ख. ग.　　　२. 'रा ॥ दत्तच्युताक्षराद्यन्तं' ङ.

कुबेरेति । कुबेरार्थस्य कुबेरधनस्य । वयोहानिर्जरा । धातुपाठे 'जॄष वयोहानावि'ति जारापर्यायत्वेन वयोहानेः पठितत्वात् । तयोर्नामधेये कीदृशी इति प्रश्नः । उत्तरं— राजराजरा जरा इति । राजराजस्य राः ऐश्वर्यम् । जरा ॥

सरसः शरदारम्भे सम्बुद्धिः कीदृशी भवेत् ।
प्रतिलोमा० ॥ ९१ ॥

॥ नवकविकवन ॥ १० ॥

अस्योत्तरस्य प्र(श्नोत्तोश्नान्त)रं च—

राजस्थानस्य सम्बुद्धिः [1]पण्डितैर्मण्डितस्य का ॥
॥ नवकविकवनं[2] ॥

[3]अथ दत्तच्युताक्षरम्—

दत्तच्युताक्षराद्यन्तं भवेत् प्रश्नोत्तरं यदि ।
दत्तच्युताक्षराद्यन्तं तद् वदन्ति मनीषिणः ॥ ९२ ॥

अथ दत्तच्युताक्षराद्यन्तम् । तल्लक्षणमाह— दत्तच्युतेति । प्रश्नोत्तरमाद्यन्तयोर्यथासंख्यं दत्तच्युताक्षरं भवेद् यदि तच्चित्रं तदाख्यं भवति । आदावक्षरदानमन्तेऽक्षरच्युतिरित्यर्थः ॥

[4]तद्यथा—

को रक्षोनिकरान्धकारतरणिर्धत्ते च का मानुषान्
सम्बुद्धिर्विदुषश्च का पृथुतरं कीदृक् तटाकोदरम् ।

---

१. 'कविभिर्मं' ग. २. '॥ दत्तच्युताक्षराद्यन्तं ' ख.
३. 'दत्तच्युताक्षरं यथा- दत्त ' ग. ४. 'यथा ' ख.

भूषां कां विदुराननस्य वनिताश्रोणिस्थली कीदृशी
नादावक्षरयुक्तिमुक्तित इह त्वाद्यन्तयोरुत्तरम् ॥ ९३ ॥

॥ रामः, धरा, बुध, साम्बु, नासां, घना ॥ १ ॥

उदाहरति—तद्यथेति । शार्दूलविक्रीडितेन लक्ष्यश्लोकेनाह– क इति । अस्मिन् श्लोकेऽक्षरद्वयात्मकमुत्तरं 'को रक्षोनिकारान्धकारतरणिः' इत्यादयः षट् प्रश्नाः राम इत्यादिषडुत्तराणि च । तेषु नादावित्युक्त्या आद्योत्तरेऽक्षरदानमक्षरच्युतिश्च नास्तीत्यर्थः । द्वितीयादिष्वस्त्येव । तत्राद्यप्रश्नस्य राम इत्युत्तरं, द्वितीयस्य धरा इत्युत्तरम् । तच्च पूर्वप्रश्नोत्तरस्य राम इति पदस्यादौ धकारदानादन्त्यस्य सविसर्गमकारस्य च्युत्या च धरा इति भवति । तृतीयोत्तरं च पूर्वप्रश्नोत्तरस्य धरेति पदस्यादौ बुवर्णदानेऽन्त्यस्य रा इति वर्णस्य च्युत्या च बुधेत्युत्तरं भवति । एवमन्येष्वप्यूह्यम् । तानि च रामः, धरा, बुध, साम्बु, नासां, घना इत्येवमाकाराणि भवन्ति ॥

को भूमीधरकन्यकासहचरः किं चामरश्रीधरं
का पूर्णेन्दुयुता तिथिर्नभसि का विद्योतते रात्रिषु ।
का सूनोर्हितमातनोति दयिते रागं त्रिधत्से च का
नादावक्षर० ॥ ९४ ॥

॥ शंभुः, काशं, राका, तारा, माता, रामा ॥ २ ॥

क इति । अत्रापि षट् प्रश्नाः । षडुत्तराणि । तेषामक्षरद्वयात्मकता च । अत्रापि पूर्ववत् सर्वमूह्यम् । उत्तराणि— शंभुः, काशं, राका तारा, माता, रामा ॥

---

१. 'णी' ख.    २. 'करं' क.

आस्ते कुत्र चतुर्मुखो जनदयापात्रं भवेत् का पुनः
कीदृक् च ग्रहमण्डली क्षितिभुजां कीदृग् बलौघस्तथा ।
कीदृक् स्यात् सुतनुर्जनश्च भवति श्लक्ष्णः पुनः केन वा
नादावक्षर० ॥ ९५ ॥

॥ नाळीके, दीनाळी, सादीना, नासादी, सुनासा, वसुना ॥३॥

आस्ते इति । अत्रापि षट् प्रश्नाः षडुत्तराणि च । तानि वर्णत्रयात्मकानीति विशेषः । अन्यत्सर्वं पूर्ववदेव । उत्तराणि तु– नाळीके, दीनाळी, सादीना । अस्यार्थः– आदिश्चासाविनश्च आदीनः तेन सहिता ग्रहाणामादिना सूर्येण सहिता । नासादी सादिरहितः असादी स न भवतीति नासादी । ससादीत्यर्थः । सुनासा । वसुना ॥

कंसं को निजघान कौ त्रिजगतीसर्गक्षयाधायिनौ
कुत्रास्ते कृतधर्मकर्मनिवहः कासूत कात्यायनीम् ।
कस्मिन् सद्गुणसञ्चयः फणिपतेः कास्ते फणामण्डले
नादावक्षर० ॥ ९६ ॥

॥ शौरिः, केशौ, नाके, मेना, रामे, धरा[3] ॥ ४ ॥

कंसमिति । अत्रापि सर्वं पूर्ववत् । उत्तराणि तु– शौरिः, केशौ नाके, मेना, रामे, धरा ॥

का पापं विनिहन्ति कं गिरिसुतानेतोपवीतं व्यधात्
का शत्रुक्षयकारिणी प्रविरते कस्मिंश्च कायः पतेत् ।

---

१. ' ना ॥ का पापं ' ख. ग. ङ. च.

२. ' कात्यायं ' क.

३. ' रा ॥ मूलं धर्म० ' ख. ग. ङ. च.

कीदृग् राजचमूर्मुखस्य सहजा का वा विभूषा पुन-
नादावक्षर० ॥ ९७ ॥

॥ गङ्गा, नागं, सेना, श्वासे, साश्वा, नासा ॥ ५ ॥

केति । षट् प्रश्नाः । षडुत्तराणि वर्णद्वयात्मकानि सर्वं पूर्ववत् । उत्तराणि– गङ्गा, नागं सेना, श्वासे, साश्वा, नासा ॥

के भूमौ न चरन्ति कुत्र पटुतां[1] धत्ते विपश्चिज्जन-
स्तोयौघान् सरितां[2] तरन्ति च कया सम्पाद्यते का नृपैः ।
स्वामी कुत्र जने करोति करुणां ज्ञानी समेतः कया
नादावक्षर० ॥ ९८ ॥

॥ देवाः, वादे, नावा, सेना, दासे, मुदा ॥ ६ ॥

क इति । अत्र पूर्ववत् सर्वम् । उत्तराणि तु– देवाः, वादे, नावा, सेना, दासे, मुदा ॥

नाट्यं कुत्र नटाः क्षितौ विदधते कूपेषु किं वर्तते
को वा[3] न क्षमतेऽवमानकणिकां का वा युवप्रीतिदा ।
निर्लज्जा भुवनेषु का च रमते कस्मिन् मनो योगिनां
नादावक्षर० ॥ ९९ ॥

॥ रङ्गे, नीरं, मानी, श्यामा, वेश्या, शिवे[4] ॥ ७ ॥

नाट्यमिति । अत्रापि सर्वं पूर्ववत् । उत्तराणि तु - रङ्गे नीरं, मानी, श्यामा, वेश्या, शिवे ॥

---

१. 'वशतां धत्ते' ङ.  २. 'सरितश्चरन्ति' क.
३. 'ना न' च.  ४. 'वे कंसं को निजघान' इत्येतच्छ्लोकानन्तरं 'मूलं धर्मचयस्य' ख. ग. ङ. च.

मूलं धर्मचयस्य कः क्षितिभुजः कस्मै स्पृहां कुर्वते
कीदृग् व्योम चरन्ति कुत्र रजनीनाथार्कतारागणाः ।
सम्बुद्धिः सरितः कथं कृपणधीर्ब्रूयाद्वचः कीदृशं
नादावक्षर० ॥ १०० ॥

॥ वेदः, भुव, विभु, दिवि, नदि, न न ॥ ८ ॥

मूलमिति । अत्रापि पूर्ववत् सर्वम् । उत्तराणि तु– वेदः, भुवे, विभु, दिवि, नदि, न न ॥

सञ्चारं कमलाकरे विदधते के द्यौः पुनः कीदृशी
कीदृक् चाम्बरकर्म केन च वपुः प्रच्छाद्यते देहिनः ।
सम्बुद्धिः क्रियते कथं सवसतेरापानभूः कीदृशी
नादावक्षर० ॥ १०१ ॥

॥ मरालाः, सामरा, ससाम, वाससा, सवास, सासवा ॥ ९ ॥

सञ्चारमिति । अत्र वर्णत्रयात्मकान्युत्तराणीति विशेषः । अन्यत् सर्वं पूर्ववत् । उत्तराणि तु— मरालाः, सामरा, ससाम, वाससा, सवास, सासवा ॥

का मेनादुहिता शिवस्य पदयोः कौ हंसकत्वं गतौ
श्रीः कीदृग् दिवसस्य गच्छति जनः कम्पश्च कस्मिन् सति ।
कान्ता केन विराजते मुनिजनास्तिष्ठन्ति कस्मिन् सदा
नादावक्षर० ॥ १०२ ॥

॥ गौरी, नागौ, सेना, त्रासे, नेत्रा, वने ॥ १० ॥

---

१. 'को धर्मोद्भवभूर्नराधिपतयः कस्मै' क.

केति । अत्रापि सर्वं पूर्ववत् । उत्तराणि तु— गौरी, नागौ, सेना, त्रासे, नेत्रा, वने ॥

अथ च्युतदत्ताक्षरम्—

पदयोः परिवृत्तिश्चेद्वर्णयोः परिवृत्तितः ।
पदार्थद्वयसाधर्म्ये च्युतदत्ताक्षरं हि तत् ॥ १०३ ॥

तद्यथा—

अनेकवर्णयुक्ताभिः शुभाभिर्गोभिर॑न्वितम् ।
विशाललोच॑नोपेतं वदनं भाति ते सखे ! ॥ १०४ ॥

॥ सदनं च ॥ १ ॥

अथ च्युतदत्ताक्षरं चित्रम् । तल्लक्षणमाह— पदयोरिति । वर्णयोः परिवृत्त्या पदयोः परिवृत्तिर्विनिमयश्चेत् पदार्थयोः साधर्म्ये च सति च्युतदत्ताक्षरमित्यन्वर्थसंज्ञकं चित्रं भवति । उदाहरति— यथेति । अनेकेति । अनेकवर्णयुक्ताभिः शुभाभिर्गोभिरन्विते । विशाललोचनोपेते ते के ब्रूत विपश्चितः ! ॥ इति प्रश्नः । वदनसदने इत्युत्तरम् । अत्र वर्णयोः परिवृत्तितः विनिमयेन वकारसकारयोर्व्यत्यासेन वकारस्थाने सकारस्य सकारस्थाने वकारस्य च दानाद् वदनसदनयोः पदयोः परिवृत्तिः वदनस्य सदनत्वं सदनस्य वदनत्वं च भवति । वदनसदनपदार्थयोः साधर्म्यम् । अनेकवर्णसहितत्वरूपं विशाललोचनोपेतत्वरूपं च साधर्म्यमप्यस्ति । एकत्र अनेकवर्णयुक्ताभिः बह्वक्षरयुक्ताभिर्वाग्भिरन्वितत्वं विशालाभ्यां लोचनाभ्यामुपेतत्वम् । अन्यत्र शुक्लादिवर्णयुक्तपशुभिरन्वितत्वं विशाललोचनाभिः स्त्रीभिरुपेतत्वमिति रूपेण पदार्थयोः समानधर्मत्वम ॥

---

१. 'रन्विते', २. 'चनोपेते ते के ब्रूत विपश्चितः ॥ ॥ वदनसदने ॥ वन्धु०' इ.

बन्धुवर्गैः सनाथेन निजनाथेन सङ्गता[1] ।
विचरन्ती[2] सदारण्ये[3] हरिणी शोभतेतराम् ॥ १०५ ॥

॥ [4]करिणी च ॥ २ ॥

बन्धुवर्गैरिति[5] । अत्र हरिणीकरिणीपदे तादृशे ॥

पुष्पेषु कलितानल्परागेण भ्रमतान्तिके ।
संहिता निजकान्तेन [6]भ्रमरी [7]भ्राजते भृशम् ॥ १०६ ॥

॥ चमरी च ॥ ३ ॥

अत्र भ्रमरीचमरीपदे तादृशे । विशेषणानि साधारणत्वेनोक्तानि ॥

पुष्पितैः फलितैः स्निग्धच्छायैस्तरुभिरन्विता[8] ।
रहिता कण्टककुलै[9]र्धरणीयं विराजते ॥ १०७ ॥

॥ सरणी च ॥ ४ ॥

[पुष्पितैरिति । अत्र धरणीसरणीपदे तादृशे ॥]

---

१. 'ते', २. 'रन्त्यौ', ३. ण्ये ते के ब्रूत विपश्चितः' ङ.
४. 'हरिणीकरिण्यौ' ङ. ५. 'सङ्गते निज' ङ.
६. 'ते के ब्रूत विपश्चितः ॥ भ्रमरीचमर्यौ ॥'
७. 'राजतेऽनिशम्' ख. ८. 'ते । रहिते' ङ.
९. 'लैस्ते के ब्रूत विपश्चितः ॥ धरणीसरण्यौ ॥ विलसच्चन्द्रवदने पृथुलोत्पललोचने । नक्षत्रमालां बिभ्राणे ते के ब्रूत विपश्चितः ॥ कालिकामालिके ॥ प्रवालपद्मरागादिशोभमाने मनोहरे । सुजातरूपं वहती ते के ब्रूत विपश्चितः ॥ चरणशरणे ॥ नानागमं०' ङ.

**नानागममयीं मूर्तिं बिभ्राणः[1] पादसङ्कुलः ।**
**दृश्यते सानुमानेष बहुधातुविभूषितः ॥ १०८ ॥**

**॥ भानुमांश्च ५ ॥**

**नानागमे**ति । अत्र सानुमान् भानुमानितिपदे तादृशे । अत्र 'कौ तौ ब्रूत विपश्चितः' इति लक्ष्यश्लोकचतुर्थपादो वक्तव्यः ॥

**समुद्वहन्[2] शरच्चन्द्रचन्द्रिकाविशदां[3] रुचिम् ।**
**गुरुत्वमनिशं[4] बिभ्रन्नारदोऽसौ विराजते ॥ १०९ ॥**

**॥ पारदश्च ॥ ६ ॥**

**समुद्वहन्नि**ति । अत्र नारदपारदपदे तादृशे ॥

**शीतलैर्निजसंस्पर्शैर्गात्रे रोमाञ्चमावहन् ।**
**आमोदं किञ्च रचयंश्चन्दनोऽयं[5] विराजते ॥ ११० ॥**

**॥ नन्दनश्च[6] ॥ ७ ॥**

[**शीतलै**रिति । अत्र चन्दननन्दनपदे तादृशे ॥]

**आचारतपसोर्धाम सत्या पत्न्या समन्वितः ।**
**ब्रह्मवंशोदधिशशी वसिष्ठोऽयं प्रकाशते ॥ १११ ॥**

---

१. 'णौ पदसङ्कुलौ । बहुधातुश्रिया युक्तौ तौ कौ ब्रूत विपश्चितः ॥ भानुमत्सानुमन्तौ' ॥ ङ.

२. 'उद्वहन्तौ शर' ङ. ३. 'कारुचिरां रुचिम् ।' ख., काविशदं वपुः ङ. ४. 'सदा गुरुत्वं दधतौ तौ कौ ब्रूत विपश्चितः ॥ ॥ नारदपारदौ ॥ कुमार्गा० ङ.

५. 'विभासते' ख. ६. 'श्च ॥ कुमार्गा०' ग.

॥ वरिष्ठश्च[1] ॥ ८ ॥

[आचारेति । अत्र वसिष्ठवरिष्ठपदे तादृशे ॥]

कुमार्गाहितसञ्चारा[2] द्विषन्तः सुमनोगणान् ।
अजस्रं काङ्क्षितस्वास्थ्याः केऽपि तिष्ठन्ति मानवाः[3] ॥ ११२ ॥

॥ दानवाश्च ॥ ९ ॥

कुमार्गेति । अत्र मानवदानवपदे तादृशे । सर्वत्र विशेषणानि साधारणत्वेनोह्यानि ॥

इन्दीवरदलश्यामा वहन्ती पुष्पमालिकाम् ।
आमोदभारं दधती शोभते कबरी भृशम् ॥ ११३ ॥

॥ शबरी च ॥ १० ॥

[इन्दीवरेति । अत्र कबरीशबरीपदे तादृशे ॥]

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा चाजनयत् सखीजननुता यं मानितं सज्जनैः ।
चारौ तस्य कृतावजायत परिच्छेदो द्वितीयोऽद्रिजा-
कल्याणानुजतां गते घनतर[4]श्रीचित्ररत्नाकरे ॥ ११४ ॥

---

१. 'श्च ॥ इन्दीवर०' ग.

२. 'रौ सहितौ काव्यशिक्षया । अजस्रं काङ्क्षितस्वास्थ्यै कौ तौ ब्रूत विपश्चितः ॥ मानवदानवौ ॥ पुत्रं चक्र०' ङ.

३. 'दानवाः ॥ मानवाश्च ॥' ग.

४. 'शुभतर' ङ.

## तृतीयः परिच्छेदः ।

**अथ तृतीयः परिच्छेदः प्रारभ्यते । अथ पूर्णक्रमच्युतम्—**

**प्रश्नेषु[1] प्रथमं पूर्णमादिमध्यान्ततस्ततः ।**
**वर्णैश्च्युतैरुत्तरं[2] यत् तत्स्यात् पूर्णक्रमच्युतम् ॥ १ ॥**

अत्र प्रथमद्वितीयपरिच्छेदयोर्लक्ष्यश्लोकाः सर्वेऽपि बहिर्लापिनः । अथान्तर्लापिन उच्यन्ते– **अथ पूर्णक्रमच्युतम्** । तल्लक्षणमाह– **प्रश्ने(ष्वि)ति ।** अत्र चित्रे चत्वारः प्रश्नाश्चत्वार्युत्तराणि । तत्र प्रथमप्रश्नस्य पूर्णं वर्णत्रयात्मकमुत्तरम् । द्वितीयादिप्रश्नत्रयस्यादिमध्यान्तेषु च्युतवर्णं वर्णद्वयात्मकमुत्तरं भवति । पू(र्वो?र्णो)क्तमेव यथाक्रम(च्युत)मुत्तरं ( यत् ) तत् पूर्णक्रमच्युतमित्यन्वर्थसंज्ञकं चित्रम् ॥

तद्यथा—

**सम्पत्कामाः कीदृशाः[3] का मृद्वयो मण्यश्च कीदृशाः ।**
**कं श्रितो युद्धकामः स्यात् सारम्भाश्चतुरुत्तरम्[4] ॥ २ ॥**

**॥ सारम्भाः, रम्भाः, साभाः[5], सारम् ॥ १ ॥**

उदाहरति– **यथेति । सम्पदिति ।** अत्र सम्पत्कामाः कीदृशा इति प्रथमप्रश्नस्य सारम्भा इत्यखण्डमुत्तरम् । मृद्व्यः का इति द्वितीयप्रश्नस्य रम्भाः इति च्युतादिवर्णमुत्तरम् । मण्यः कीदृशा इत्यस्य तृतीयप्रश्नस्य साभा

---

१. ' षु पूर्णं प्रथममादि ' ग. ङ. २. ' रुत्तरयेत् तत् ' क.
३. ' शाः स्युः का मृद्व्यः कीदृशी नदी ' क. ख. ग. च.
४. ' श्च त्रिपूत्तरम् ' ख. च. ५. ' साम्भाः ' क. ख. ग. च.

इति च्युतमध्यवर्णमुत्तरम् । कं श्रितो युद्धकामः स्यादिति चतुर्थप्रश्नस्य सारमिति च्युतान्तमुत्तरम् । एवमुत्तरत्र नवसु लक्ष्यश्लोकेषु लक्षणानुगतिर्द्रष्टव्या ॥

कः श्रीमान् मूर्ध्नि को [1]दैववैपरीत्ये भवेच्च कः ।
कः कुत्र धत्ते माल्यानि तेषां नाकेश उत्तरम् ॥ ३ ॥

॥ नाकेशः, केशः, नाशः, ना के ॥ २ ॥

क इति । कः श्रीमानित्येकः प्रश्नः । मूर्ध्नि क इति द्वितीयः । दैववैपरीत्ये को भवतीति तृतीयः । कः कुत्र माल्यानि धत्त इति चतुर्थः । तेषां नाकेश इति अखण्डादिमध्यान्तच्युतान्युत्तराणि तु— नाकेशः, केशः, नाशः । ना के इति पदद्वयात्मकं चतुर्थोत्तरम् ॥

*कीदृगब्धिरधीरं कः श्रयेत् को नाशयेद् यतिम् ।
रजनीषु नभः कीदृक् सभङ्गस्तेषु तू[2]त्तरम् ॥ ४ ॥

॥ सभङ्गः, भङ्गः, सङ्गः, सभम् ॥ ३ ॥

कीदृगिति । अत्र प्रश्नचतुष्टयस्य सभङ्ग इति पूर्वोक्तरीत्या उत्तराणि ॥

विस्तीर्णः कोऽसुहर्ता कः श्लाघ्यः को वृक्षशालिनः ।
देशस्य कीदृग् सम्बुद्धिस्तेषां सागर उत्तरम् ॥ ५ ॥

---

* इदं १० तमश्लोकतया खपाठे, 'यो वेगवान्' (७) 'विस्तीर्णः को' (५) 'कीदृग्' (४) 'किं मुखाभरणं' (६) इति च ङपाठे क्रमः ।

---

१. 'दैववैप' ग. २. 'सुत्तरम्' च.

॥ सागरः, गरः, सारः, साग ॥ ४ ॥

विस्तीर्ण इति । अत्र प्रश्नचतुष्टयस्य पूर्वोक्तकारीत्या उत्तराणि । सागरः, गरः, सारः, साग ॥

किं[1] मुखाभरणं भीमः कं जघान दधाति कम् ।
ग्लौः का मातुश्च सम्बुद्धिस्तेषामम्बकमुत्तरम् ॥ ६ ॥

॥ अम्बकं, बकं, अङ्कं, अम्ब ॥ ५ ॥

किमिति । अत्रापि प्रश्नचतुष्टयम् । अम्बकमित्याद्युत्तरचतुष्टयं सर्वं पूर्ववत् ॥

को वेगवान् नाट्यदेशः को वेदो भाति कीदृशः ।
कं[2] पुनर्भजते वीरस्त्वेषां सारङ्ग उत्तरम् ॥ ७ ॥

॥ सारङ्गः, रङ्गः, साङ्गः, सारम् ॥ ६ ॥

क इति । चत्वारः प्रश्नाः स्पष्टाः । तेषां सारङ्ग इत्यखण्डादिमध्यान्तच्युतान्युत्तराणि । तानि च— सारङ्गः, रङ्गः, साङ्गः, सारमिति ॥

युद्धप्रियः को दंशति[3] को वा खस्य च को गुणः ।
का जलस्य च सम्बुद्धिस्तेषां नारद उत्तरम् ॥ ८ ॥

॥ नारदः, रदः, नादः, नार ॥ ७ ॥

युद्ध इति । अत्र प्रश्नचतुष्टयस्य नारद इत्याद्युत्तरचतुष्टयं च सर्वं पूर्ववत् ॥

---

१. 'किम्' ख. ङ. च. २. 'किं पुनः श्लाघते वीरः' ङ. च
३. 'विशदः को' ख.

को भीषणो विशोके[1] को वपुराच्छादयेच्च किम् ।
का तुरङ्गस्य सम्बुद्धिस्तेषां वाहस उत्तरम् ॥ ९ ॥

॥ वाहसः, हसः, वासः, वाह ॥ ८ ॥

क इति । अत्र प्रश्नानां वाहस इति पूर्ववदुत्तराणि ॥

किं लक्ष्मीसद्म कं देवा नमन्ति द्यौश्च कं सृजेत् ।
श्रेणीसमार्थशब्दः[2] कस्तेषां राजीवमुत्तरम् ॥ १० ॥

॥ राजीवं, जीवं, रावं, राजी ॥ ९ ॥

कीदृग् जनः कर्मणासिः कीदृक् कः स्यात् कदध्वनि ।
कालपाणितलं कीदृक् तेषां पाशित उत्तरम् ॥ ११ ॥

॥ पाशितः, शितः, पातः, पाशि ॥ १० ॥

कीदृगिति । जनः कर्मणा कीदृगित्यादि प्रश्नचतुष्टयम् । पाशित इत्याद्युत्तराणि । पाशितो बद्ध इत्यखण्डमुत्तरम् । शित इति च्युतादि । पात इति च्युतमध्यम् । पाशि इति च्युतान्तम् ॥

अथ एकावृत्तम्—

एकावृत्तिर्द्विरावृत्तिरर्थोक्तावुत्तरस्य[3] चेत् ।
एकावृत्तं द्विरावृत्तमिति संज्ञां भजेत तत् ॥ १२ ॥

---

१. ‘ विशोकः को ’ ख. च.

२. ‘ समश्च कः शब्दस्तेषां ’ ख. च. ‘ समार्थः कः शब्दस्तेषां ’ ग. ङ.

३. ‘ रर्थोक्ता ’ ख. ङ. च.

अथैकावृत्तद्विरावृत्ताख्ये द्वे चित्रे । तयोर्लक्षणमाह- **एकावृत्तरिति** । उत्तरस्य उत्तरशब्दस्य अर्थोक्तौ अर्थकथनावसरे एकवारमावृत्तिश्चेत् तच्चित्रमेकावृत्तसंज्ञं भवेत् । प्रथमं केषाञ्चित् प्रश्नानामुत्तरत्वेन कानिचित् पदानि विभज्य अनन्तरमेकवारमावर्त्य प्रकारान्तरेण पदविभागं कृत्वा अवशिष्टानां प्रश्नानां क्रमादुत्तरेषु सम्पादितेषु एकावृत्तं भवति । अत्र द्विवारं पदविभागेऽपि आवृत्तेरेकत्वादेकावृत्तं तत् । एवं द्विरावृत्तम् । एतद् द्वयमप्यन्तर्लापि ॥

तत्र एकावृत्तं यथा—

वशा कीदृक् तनुस्तन्व्याः[1] कीदृक् का मदकारिणी[2] ।
वर्षासु कीदृशी च द्यौर्नीरदावलिभासुरा ॥ १३ ॥

॥ नीरदा, वलिभा, सुरा, नीरदावलिभासुरा ॥ १ ॥

उदाहरति । **यथेति** । **वशेति** । अत्र प्रश्नचतुष्टयं स्पष्टम् । नीरदावलिभासुरेत्युत्तराणि । नीरदा रदरहिता वलिभा वलिमती सुरा इति विभज्य प्रश्नत्रयोत्तराणि । नीरदावलिभासुरेत्यखण्डमन्त्यप्रश्नस्योत्तरम् ॥

कां राजा[3] पाति का हन्ति रूपं कीदृक् च पक्वणः ।
बलौघः कीदृशो राज्ञां कुञ्जराश्वकुलाकुलः ॥ १४ ॥

॥ कुं, जरा, श्वकुलाकुलः, कुञ्जराश्वकुलाकुलः ॥ २ ॥

**कामिति** । अत्र पूर्ववत् प्रश्नचतुष्टयम् । उत्तराणि- कुं, जरा, श्वकुलाकुलः इति प्रश्नत्रयस्य, कुञ्जराश्वकुलाकुल इत्यखण्डमन्त्यप्रश्नस्य ॥

---

१. 'स्तस्याः' च.  २. 'मधुकारिणी' ख. चं.

३. 'जायति' ग.

का तमो हन्ति कं शम्भुरदहत् [1]कान्नसाधिका ।
को जेता का श्रुतीर्धत्ते भारतीशमुखावली ॥ १५ ॥

॥ भाः, रतीशम्, उखा, बली, भारतीशमुखावली ॥ ३ ॥

केति । अत्र पञ्च प्रश्नाः । भाः, रतीशम्, उखा, बली इति चतुर्णामुत्तराणि विभक्तानि । भारतीशमुखावलीत्यखण्डमन्त्यप्रश्नस्य । अत्र बवयोरभेदः ॥

[2]और्वः क्व कीदृशो व्याधः कान् प्रसूते च दुन्दुभिः ।
कीदृशो भीमसेनश्च सिन्धुराजिविहारवान् ॥ १६ ॥

॥ सिन्धुराजि, विहा, रवान्, सिन्धुराजिविहारवान् ॥ ४ ॥

और्व इति । अत्र प्रश्नचतुष्टयम् । उत्तराणि- सिन्धुराजि, विहा, रवान् इति प्रश्नत्रयस्य । सिन्धुराजिविहारवानित्यन्त्यस्य । सिन्धुरैराजिः सिन्धुराजिः सैव विहारो यस्य स तथोक्तः ॥

कः पत्री [3]का स्थिरा कार्कसम्बुद्धिः [4]कीदृशोऽर्भकः ।
कः सेव्यः कः पतिर्भैम्या वीरसेनसमुद्भवः ॥ १७ ॥

॥ विः, रसा, इन, समुत, भवः, वीरसेनसमुद्भवः ॥ ५ ॥

क इति । अत्र षट् प्रश्नाः । तेषु विः, रसा, इन, समुत, भवः इति पञ्चानामुत्तराणि । वीरसेनसमुद्भव इति षष्ठस्य ॥

---

१. 'कान्नि' च.　　२. 'ओघः क्व' च.
३. 'काचला' क. ङ. च.　　४. 'कीदृगर्भकः' ङ.

छन्दोगैर्गीयते किं किं निन्द्यते कीदृशा नृपाः ।
सेनाश्च राज्ञां कीदृश्यः सामजाळ्यश्चितश्रियः ॥ १८ ॥

॥ साम, जाळ्यं, चितश्रियः, सामजाळ्यश्चिताश्रियः ॥ ६ ॥

छन्दोगैरिति । अत्र प्रश्नचतुष्टयम् । साम, जाळ्यं, चिताश्रियः, इति त्रयाणाम् । सामजाळ्याश्चितश्रिय इति तुर्यस्य ॥

किं चलं यान्ति पान्थाः काः कः सृजेत् का सतां प्रिया ।
कीदृङ्[2] मरुः किं मलिनं मानसम्पदवी रजः ॥ १९ ॥

॥ मानसं, पदवीः, अजः, मानसम्पत्, अविः, रजः ॥ ७ ॥

किमिति । अत्र षट् प्रश्नाः । तेषु मानसं, पदवीः, अजः इत्यावृत्तिं विना त्रयाणामुत्तरम् । आवर्त्य अवशिष्टत्रयस्योत्तराणि । मानसम्पत्, अविः, रजः इति ॥

किं धामेन्द्रस्य का हन्ति ध्वान्तं कस्य क्षितौ स्थितिः ।
ग्रसते चन्द्रसूर्यौ कस्तेषां स्वर्भानुरुत्तरम् ॥ २० ॥

॥ स्वः, भाः, नुः, स्वर्भानुः ॥ ८ ॥

किमिति । अत्र प्रश्नचतुष्टयम् । स्वः, भाः, नुः, इति त्रयाणां; स्वर्भानुरिति तुर्यस्योत्तरम् ॥

राज्ञां प्रिया का समदाः के प्रसूते च कान् नभः ।
भोगीन्द्रः कीदृशस्तेषामुत्तरं भूरिभारवान् ॥ २१ ॥

---

१. 'शो नृ' च.   २. 'कस्त्विग्मरुक् किं' ख. च.

॥ भूः, इभाः, रवान्, भूरिभारवान् ॥ ९ ॥

राज्ञामिति । अत्र प्रश्नचतुष्टयम् । तेषु भूः इभाः, रवान्, इति त्रयाणामुत्तराणि । भूरिभारवानिति तुर्यस्य ॥

सम्बुद्धिः कथमण्डजस्य निखिलैः किं प्रार्थ्यते वाससः
को वारम्भक उन्नतश्च भुवि कः किं लोलमापाण्डु किम् ।
[1]किं धत्ते वनभूर्जवं वहति कः कीदृक् पुनर्यौवतं
वेशन्तन्तुरगो मनोहरवपुस्तेषूत्तराणि क्रमात् ॥ २२ ॥

॥ वे, शं, तन्तुः, अगः, मनः, हरवपुः, वेशन्तं, तुरगः, मनोहरवपुः ॥ १० ॥

सम्बुद्धिरिति । अत्र नव प्रश्नाः । तेषामनावृत्तावेव षण्णामुत्तराणि । वे, शं, तन्तुः, अगः, मनः, हरवपुः इति । आवृत्तौ वेशन्तं, तुरगः, मनोहरवपुः इति त्रयाणामुत्तराणि ॥

अथ द्विरावृत्तम् । तद् यथा –

कीदृशस्तापसजनो वर्षाकालश्च कीदृशः ।
साधूनां च कुलं कीदृगपराग इहोत्तरम् ॥ २३ ॥

॥ अपरागः, अपरागः, अपरागः, ॥ १ ॥

इदं पुन्नपुंसकयोः साधारण्येन चमत्कारकारि ।

अथ द्विरावृत्तम् । अस्यापि लक्षणं पूर्वमेवोक्तम् । उदाहरति- यथेति ।

१. 'कं' ख. च.

कीदृश इति । अत्र प्रश्नत्रयम् । त्रीण्युत्तराण्यखण्डानि अपराग इति । अपगतो रागो यस्येत्यपरागः इति प्रथमप्रश्नोत्तरम् । अपरागः परागरहित इति द्वितीयस्य । अपरागः परेभ्य आगोऽपराधस्तन्न विद्यते यस्य तत्तथोक्तम् । इदं सकारान्तनपुंसकलिङ्गम् । पुन्नपुंसकसाधारण्येन अपराग इति पदस्य चमत्कारित्वम् । आवृत्तिद्वयसत्त्वाद् द्विरावृत्तमिदम् ॥

वर्षासु जलदः कीदृग् जायेत कमलं कुतः ।
कीदृक् स्याल्लुब्धगेहेऽर्थी तेषां वारित उत्तरम् ॥ २४ ॥

॥ वारितः, वारितः, वारितः ॥ २ ॥

वर्षास्विति । अत्र प्रश्नास्त्रयः । तेषामखण्डानि वारित इति त्रीण्युत्तराणि । वारितो वारित इति । अनावृत्तौ तृतीयस्योत्तरम् ॥

ओघा विशन्ति के गङ्गां कीदृशाः पटहाः पुनः ।
वर्तते किं उटाकादावुत्तरं तेषु[1] सारवाः ॥ २५ ॥

॥ सारवाः, सारवाः, सारवाः ॥ ३ ॥

ओघा इति । अत्र प्रश्नास्त्रयः । तेषां सारवाः इत्यखण्डानि त्रीण्युत्तराणि ॥

आस्थानं कीदृशं राज्ञां वदनं चापि कीदृशम् ।
कीदृशं पङ्कजकुलं सदाळिकविराजितम् ॥ २६ ॥

॥ सदाळिकविराजितं, सदाळिकविराजितं, सदाळिकविराजितम् ॥

---

१. 'त्रिषु' ङ.

**आस्थानमिति** । अत्र प्रश्नत्रयम् । सतामालिः सदालिः तया कविभिश्च राजितमित्यनावृत्तौ प्रथमप्रश्नस्योत्तरम् । सदालिकेन फालेन विराजितमिति द्वितीयप्रश्नस्य प्रथमावृत्तौ । सदा अलिभिः कविभिर्जलपक्षिभिश्च विराजितमिति द्वितीयावृत्तौ तृतीयप्रश्नस्योत्तरम् ॥

**का सुधीभूषिता भीरुः कीदृशः कीदृशी निशा ।**
**कुतो जयश्रीः सुमतिः कीदृशः स्यात् सभाजितः ॥ २६ ॥**

**॥ सभा, जितः । सभा, आजितः । सभाजितः ॥ ५ ॥**

**केति** । अत्र पञ्च प्रश्नाः । तेषु (प्रथमद्वितीययोः) सभा, जितः इत्युत्तरे । पुनः प्रश्नद्वयस्य प्रथमावृत्तौ सभा भैर्नक्षत्रैः सहिता, आजितः युद्धाद् इत्युत्तरद्वयम् । द्विरावृत्तौ सभाजितः पूजितः इत्यखण्डं पञ्चमस्योत्तरम् ॥

**सम्बुद्धयो ब्रह्मशम्भुपक्षिणां काः क पङ्कजम् ।**
**निश्रेष्टता क कुत्र श्रीरुत्तरं तेषु केशवे ॥ २८ ॥**

**॥ क, ईश, वे । के, शवे, केशवे ॥ ६ ॥**

**सम्बुद्धय इति** । अत्र षट् प्रश्नाः । तत्र क, ईश, वे इत्यनावृत्तौ त्रीण्युत्तराणि । प्रथमावृत्तौ तु के, शवे इति द्वे उत्तरे । द्वितीयावृत्तौ तु केशवे इत्येकमुत्तरम् ॥

**तमोपहा का कुत्रास्ते तेजः कात्रम्बरोदितौ ।**
**मधुरा साहिती[1] कस्मिन्नुत्तरं[2] तेषु भारवौ ॥ २९ ॥**

---

१. 'कस्मिन् काव्ये भवति भारवौ' ख. च.
२. 'त्तराणीह भारवौ' ङ.

॥ भाः, रवौ । भारवौ । भारवौ ॥ ७ ॥

तम इति । अत्र चत्वारः प्रश्नाः । तेषु भाः, रवौ इत्यनावृत्तौ द्वयोरुत्तरम् । प्रथमावृत्तौ भं च आरवश्च भारवौ इति तृतीयप्रश्नस्य । द्वितीयावृत्तौ अपि भारवावित्यखण्डं पदम् । भारविर्नाम कश्चित् कविस्तस्मिन् ॥

मुरारेः कीदृशं चक्रं कीदृशं ग्रहमण्डलम्[1] ।
गृहस्थस्य गृहं कीदृक् सदारस्थितिभासुरम् ॥ ३० ॥

॥ सदा अरस्थितिभासुरं, सदारस्थितिभासुरं, सदारस्थितिभासुरम् ॥ ८ ॥

मुरारेरिति । अत्र प्रश्नास्त्रयः । तेषां सदा अरस्थितिभासुरम् अराणां सहस्रसंख्याकानां स्थित्या भासुरमित्यनावृत्तावेकस्योत्तरम्; प्रथमावृत्तौ तु संश्चासावारश्च सदारः । तस्य स्थित्या भासुरमिति द्वितीयप्रश्नस्योत्तरम् । (द्वितीयावृत्तौ सदारस्थितिभासुरमित्यखण्डमेव तृतीयप्रश्नस्योत्तरम् ॥)

कामध्यास्ते नरो वृद्धः कीदृक् कीदृक् च पर्वतः ।
कीदृशः केसरी [2]तेषामुत्तरं कुञ्जराजितः ॥ ३१ ॥

॥ कुं, जराजितः । कुञ्जराजितः । कुञ्जराजितः ॥ ९ ॥

कामिति । अत्र प्रश्नचतुष्टयम् । तेषु द्वयोः कुं, जराजितः इत्युत्तरद्वयमनावृत्तावेव । प्रथमावृत्तौ तु कुञ्जराजितः कुञ्जैः कन्दरै राजित इति तृतीयप्रश्नस्योत्तरम् । द्वितीयावृत्तावपि कुञ्जराजित इत्यखण्डमेवोत्तरम् । अर्थस्तु कुञ्जरैराजित इति चतुर्थप्रश्नस्य ॥

---

१. 'ग्राममण्डलम्' ख. घ. २. 'चैषा' क.

लोके मायति को गुणश्च नभसः को भूभुजः पान्ति कां
के वा द्रष्टुमपि क्षमा न समरं किं ग्राहसम्बोधनम् ।
शब्दो युष्मदि को बहुत्ववचनः षष्ठीविभक्तौ पुनः
षट्स्वेतेषु षडुत्तरप्रभवभूः कुम्भीरवोऽसंशयम् ॥ ३२ ॥

॥ कुम्भी, रवः । कुं, भीरवः । कुम्भीर, वः ॥ १० ॥

**कुम्भीरव** इति । कुम्भी रव इत्यनावृत्तौ द्वयोरुत्तरम् । प्रथमावृत्तौ कुं, भीरव इति द्वयोरुत्तरे । द्वितीयावृत्तौ कुम्भीर आह, वः इति द्वे उत्तरे ॥

अथ वचनमात्रभिन्नम्—

अभिन्नमर्थशब्दाभ्यां भिन्नं वचनमात्रतः ।
उक्तं[1] वचनभिन्नं तदुत्तरं प्रश्नयोर्द्वयोः[2] ॥ ३३ ॥

अथ वचनमात्रभिन्नम् । लक्षणमाह— **अभिन्नमिति** । **अर्थ-शब्दाभ्यामर्थेन** शब्देन अभिन्नमेकं, वचनमात्रतो भिन्नं प्रश्नद्वयस्य एकं तदुत्तरं तत् तन्मात्रभिन्नं वचनमात्रभिन्नमाहुः । भिन्नाख्यचित्रकथनावसरे वचनभिन्नस्योक्तत्वात् पुनस्तत्कथनमसङ्गतमिति न वाच्यम् । तत्र अलय इत्यादिसूत्रेषु अलय इति शब्दस्याभिन्नत्वेऽपि लयरहितत्वभृङ्गत्वरूपयोरर्थयोर्भिन्नत्वात् । अत्र तु शब्दार्थयोरेकत्वादस्य पृथङ्निर्देशो युक्तः ॥

तद् यथा—

कर्मजातमलं कः के विधातुं धरणीतले ।
अनयोः कविभिर्वाच्यं प्रश्नयोरेकमुत्तरम् ॥ ३४ ॥

---

१. ' विद्युति ' ग. २. ' तदुक्तं भिन्नवचनमुत्तरं ' ख. च., ' तस्मा-

॥ नरः ॥ १ ॥

उदाहरति यथेति । कर्मजातमिति । इदं बहिर्लापि । कर्मजातं सुकृतदुष्कृतादिकं कर्तुं कः अलं के वा अलम् । अत्र कः के इति पदे एकवचनबहुवचनान्ते । अलमित्युभयसाधारणमव्ययम् । तयोः प्रश्नयोर्नर इत्येकमुत्तरम् । तदेकवचनं नरशब्दे । नृशब्दे बहुवचनम् । उभयात्मकस्य तस्य मनुष्यवाचित्वेनाभिन्नार्थकत्वमेकरूपतया शब्दतश्चाभिन्नत्वम् । पृथग्वचनत्वाद्वचनमात्रभिन्नमिति लक्षणानुगतिः ॥

साम्यं वोढुमलं कः के भुवनेऽन्येन केनचित् ।
अनयोः कविभिर्वाच्यं० ॥ ३५ ॥

। सदृशः ॥ २ ॥

साम्यमिति । भुवने को वा के वा अन्येन साम्यं वोढुमलं समर्थः समर्थाश्च । तयोः प्रश्नयोः सदृश इत्येकमुत्तरम् । तच्चैकवचनबहुवचनसाधारणसदृशसदृक्शब्दयो रूपम् ॥

[1]पिपासुतामलं हर्तुं कानि किं वा शरीरिणाम् ।
अनयोः कविभिर्वाच्यं० ॥ ३६ ॥

॥ वारि ॥ ३ ॥

पिपासुतामिति । कानि किं वा (इति) प्रश्नौ । उत्तरमेकं वारीति । एकत्र वार्शब्दः, अन्यत्र वारिशब्दः ।

---

१. ' पिपासुना कानि किं वा पातुं शक्यं शारीरिणा । ' क.

सञ्चारमनिशं कर्तुमलं किं के नभस्तले।
अनयोः कविभिर्वाच्यं० ॥ ३७ ॥

॥ वयः ॥ ४ ॥

सञ्चारमिति। नभस्तले सञ्चारं कर्तुं किं के अलम्। अत्रैकत्व-वाचिनो नपुंसकलिङ्गता बहुत्ववाचिनः पुलिङ्गता च वाच्या। वय इत्युत्तरं तादृशं भवति। तद् वयःशब्दविशब्दयो रूपम् ॥

कः के समुन्मूलयितुं शक्यं चण्डेन वायुना।
अनयोः कविभिर्वाच्यं० ॥ ३८ ॥

॥ भूरुहः ॥ ५ ॥

*दातुमिति। पुष्पाणि दातुं को वा अलं के वा अलमिति प्रश्नौ। तयोर्भूरुह इत्युत्तरम। तस्य क्वचिदकारान्तता। हकारान्ततान्यत्र ॥

अलं कः के मदोदग्रकुम्भिकुम्भविदारणे।
अनयोः कविभिर्वाच्यं० ॥ ३९ ॥

॥ मृगराजः ॥ ६ ॥

अलमिति। प्रश्नौ स्पष्टौ। मृगराज इत्युत्तरम्। तस्य क्वचिद-कारान्तता, क्वचिज्जकारान्तता ॥

निखिलानां जनानां के को वा कर्तुमलं प्रियम्।
अनयोः कविभिर्वाच्यं० ॥ ४० ॥

---

* व्याख्यानुसारी पाठो मातृकासु नोपलभ्यते।

॥ मधुरवाचः ॥ ७ ॥

निखिलानामिति । प्रश्नौ स्पष्टौ । मधुरवाच इत्युत्तरम् । तच्च क्वचिदकारान्तं क्वचिच्चकारान्तम् ॥

धर्माधर्मावलं ज्ञातुं कः के वा जगतीतले ।
अनयोः कविभिर्वाच्यं० ॥ ४१ ॥

॥ द्विपादः ॥ ८ ॥

धर्माधर्माविति । कः के वा धर्माधर्मौ ज्ञातुमलम् । अत्र प्रश्नद्वये द्विपाद इत्युत्तरम् । तच्च एकत्र अकारान्तमन्यत्र दकारान्तम् ॥

शास्त्रार्थमखिलं ज्ञातुं कौ वा के वा जगत्यलम् ।
अनयोः कविभिर्वाच्यं० ॥ ४२ ॥

॥ बुधः ॥ ९ ॥

शास्त्रार्थमिति । शास्त्रार्थं ज्ञातुं कः के वा अलमिति प्रश्नौ । तयोः उत्तरं बुध इति । तच्चैकत्राकारान्तमन्यत्र धकारान्तम् ॥

गन्तुं झटिति पन्थानं नालं कः के महीतले[1] ।
अनयोः कविभिर्वाच्यं० ॥ ४३ ॥

॥ खञ्जः[2] ॥ १० ॥

---

१. 'कौ वा के वा महीतले' ख. 'कः के वालं धरातले' ङ.

२. 'सजरसः, सजरसः ॥ १० ॥
कः के वा कबळीकर्तुमलं भीमान् भुजङ्गमान् ।
अनयोः कविभिर्वाच्यं प्रश्नयोरेकमुत्तरम् ॥
बर्हिणः, बर्हिणः ॥ ११ ॥ अथ क्रिया' च

गन्तुमिति । कः के वा पन्थानं झटिति गन्तुं नालमिति प्रश्नौ । तत्र खञ्ज इत्युत्तरम् । एकत्र अकारान्तमन्यत्र जकारान्तम् ॥

अथ क्रियाकर्त्रादिगुप्तम्—

[1]पदबन्धनसामर्थ्यादस्फुटं यत्र वर्तते ।
[2]क्रियाकर्त्रादि तत्प्राहुः क्रियागुप्तादिकं बुधाः ॥ ४४ ॥

अथ क्रियाकर्त्रादिगुप्तम् । तल्लक्षणमाह– पदेति । पदबन्धनसामर्थ्यात् क्रियाकर्त्रादिकं यत्रास्फुटं वर्तते तद् बुधाः क्रियाकर्त्रादिगुप्तं वदन्ति । क्रियागुप्तौ क्रियागुप्तम् । कर्तृगुप्तौ कर्तृगुप्तम् । एवं कर्मादिकारकगुप्तिषु । इदमन्तर्लापि ॥

तद्यथा—

अस्य लोकस्य विपदं[3] रणे हत्वा दशाननम् ।
इति सम्प्रार्थितो देवैर्भगवान् मधुसूदनः ॥ ४५ ॥

॥ अत्रास्येति क्रिया गुप्ता ॥ १ ॥

यथेति । अस्येति । रणे दशाननं हत्वा लोकस्य (विपदं) अस्य क्षिप । अस्येति 'असु क्षेपणे' इति धातोर्लोटि मध्यमपुरुषैकवचनम् । इति देवैर्मधुसूदनः सम्प्रार्थितः । अत्र लोकस्येति पदस्य सन्निधानादस्येति पदमिदं शब्दभ्रमं विदधाति । तस्मादिदं क्रियागुप्तम ॥

पुरारण्यं सदाव यत् तद् दग्धमधुना क्षणात् ।
इति व्याहृतवानिन्द्रो दृष्ट्वा [4]लुष्टं तु खाण्डवम् ॥ ४६ ॥

---

१. 'पदं बन्धन' च. २. 'क्रियादिकं तद्वदन्ति क्रिया' क.
३. 'दो रणे' ख. ४. 'नष्टं' ख.

॥ सदा आवमिति क्रिया गुप्ता ॥ २ ॥

पुरेति । इन्द्रः खाण्डवं प्लुष्टं दृष्ट्वा पुरा यदरण्यं सदा आवम् अपालयं तदधुना क्षणाद् दग्धमिति व्याहृतवान् । अत्र सदावमिति शब्दः दावसाहित्यभ्रमं विदधाति । तस्मादिदमपि क्रियागुप्तम् ॥

अथ क्रियाकर्तृगुप्तम्[1]—

दशकण्ठे विनिहते हरीणां रक्षसामपि ।
प्रहर्षेण स्तुतो राजा वृषभं रघुभूभुजाम् ॥ ४७ ॥

॥ अत्र स्तुत इति क्रिया गुप्ता । हरीणां रक्षसामपि राजाविति कर्तृगुप्तौ ऋषभमित्युत्तरपदं[2] भवति ॥ ३ ॥

अथ क्रियाकर्तृगुप्तम् । दशकण्ठ इति । दशकण्ठे विनिहते हरीणां रक्षसामपि राजौ । राट्शब्दे प्रथमाद्विवचनम् । हर्षेण रघुभूभुजामृषभं रामं स्तुतः । 'ष्टुञ् स्तुतौ' इति धातोः लिटि प्रथमपुरुषद्विवचनम् । राजौ ऋषभमित्यत्र जकारात्परस्यौकारस्य "एचोऽयवायावः" (पा० सू० ६–१–७८) इत्यावादेशो जायेत । तस्मात् स्तुत इति क्रियाया राजाविति कर्त्रोश्चास्फुटत्वात् क्रियाकर्तृगुप्तमिदम् ॥

अथ क्रियाकर्मगुप्तम्—

चित्रं तमःसमूहं त्वं बिभ्राणो मेचकच्छविम् ।
महिषव्यूहकपटाद् भानोरग्रे सरोऽरुणः ॥ ४८ ॥

॥ अत्र सर इति कर्मगुप्तिः । अरुण इति क्रियागुप्तिः ॥ ४ ॥

---

१. 'गुप्तम् ऋष' च.     २. 'पदम् ॥ ३ ॥' ख. च.

चित्रमिति । हे तमःसमूह! मेचकच्छविं बिभ्राणस्त्वं महिषव्यूह-कपटाद् भानोरग्रे पुरः सरः कासारम् अरुणो निरुद्धवान् । चित्रम् । अत्र कर्मत्ववाचिनः सर इति पदस्य अग्रे इति पदसंबन्धादग्रेसर इत्येव प्रतीतिः स्यात् । अरुण इति पदस्यापि सूरसूतवाचकत्वबुद्धिः स्यात् । अत इदं क्रिया-कर्मगुप्तम् ॥

अथ कर्तृमात्रगुप्तम्[1]—

सम्प्रापितायां शुभ्रत्वं सभायां नारदत्विषा ।
उवाच वाच मधुरा हर्षयन्[2] निखिलान् जनान् ॥ ४९ ॥

॥ अत्र नेति कर्तृगुप्तिः ॥ ५ ॥

सम्प्रापितायामिति । ना मनुष्यः रदत्विषा दन्तकान्त्या सभायां शुभ्रत्वं सम्प्रापितायां सत्यां निखिलान् जनान् हर्षयन् मधुरां वाचमुवाच । अत्र नेति कर्तुरस्फुटत्वात् कर्तृगुप्तम् ।

अथ कर्ममात्रगुप्तिः—

सन्ततं भूधरभुवो देवो रक्षतु माधवः ।
स्वभक्तानल्पसङ्कल्पकल्पनाकल्पपादपः ॥ ५० ॥

॥ अत्र मा इति कर्मगुप्तिः[3] ॥ ६ ॥

अथ कर्मगुप्तम् । सन्ततमिति । भूधरभुवो धवः पतिः शिवः मा मां रक्षतु । अत्र मा इति कर्मणः अस्फुटत्वात् कर्मगुप्तम् ॥

---

१. 'गुप्तिः' ख.  २. 'यन्नखि' ख. ग. ङ. च.
३. 'गुप्तम्' ङ.

(अथ करणगुप्तिः—)

क्वास्ते विरचितप्रीतिर्मधुकैटभसूदनः ।[1]
भोगीन्द्रभोगपर्यङ्के शयानः सहितः श्रिया ॥ ५१ ॥[2]

॥ अत्र क्वेति करणगुप्तिः ॥ ७ ॥

क्वेति । क्व भुक्त्वा विरचितप्रीतिः । अन्यत्सर्वं स्पष्टम् । अत्र क्वेति शब्दस्याधिकरणार्थत्वमेव प्रतीयेत नान्यत् । तस्मादिदं करणगुप्तम् ॥

अथ सम्प्रदानगुप्तिः—

[3]अर्थान् बहिश्चरान् प्राणान् को वास्मिन् जगतीतले ।
मधुपात्रे प्रदिशति [4]प्राप्तुमिच्छन् परां गतिम् ॥ ५२ ॥

॥ अत्र मधुपात्रे इति संप्रदानगुप्तिः ॥ ८ ॥

अर्थानिति । अत्र मधुपात्रे इति पदमधिकरणत्वभ्रमकरम् । अतः सम्प्रदानगुप्तम् ॥

राज्ञां कुलं मदश्रान्तं बिभीयादपि वीर्यवत् ।[5]
कियान् कीचक इत्यार्तो भीमोऽभाषत पार्षतीम् ॥ ५३ ॥

॥ मदित्यपादानगुप्तिरत्र ॥ ९ ॥

राज्ञामिति । अत्र मदश्रान्तं मत् अश्रान्तमनिशम् । मदिति पदमस्मच्छब्दे पञ्चम्येकवचनम् । तस्यास्फुटत्वादपादानगुप्तम् ॥

---

१. 'तिः सागरे कमलेक्षणः ' ङ. २. ' गशयने शयानः ' ग.
३. " स्वहस्तापचितं रागात् प्रसूनं कल्पशाखिनः ।
कैलासोपवने प्रादात् पार्वत्या ईप्सितं शिवः " ॥
॥ अत्र पार्वत्या इति संप्रदानगुप्तिः ॥ ८ ॥ क. ग.
४. प्रार्थयन्नुत्तमां गतिम् ॥ ' ङ. ५. ' दधुनापि यत् । ' ख. घ.

निर्धूतहुतभुग्दीप्तिर्भानुः[1] सम्प्रति दृश्यते ।
हासपात्रीकृतोदारतप्तचामीकरच्छविः ॥ ५४ ॥

॥ अत्र नुरिति संबन्धगुप्तिः ॥ १० ॥

निर्धूतेति । अत्र भाः नुः मनुष्यस्य द्युतिरित्यर्थः । भानुरित्येव प्रतीतिः स्यादतः संबन्धगुप्तिः ॥

या मन्दराद्रि[2]मथितादुद्भूत क्षीर[3]सागरात् ।
एतया क्रियतेऽजस्रं स्थितिर्गाढानुरागया ॥ ५५ ॥

॥ अत्र ए इत्यधिकरणगुप्तिः ॥ ११ ॥

येति । अत्र ए विष्णौ तया इति पदविभागः । अत्रैतच्छब्द-प्रतीतिः स्यादतोऽधिकरणगुप्तम् ॥

पुत्रं चक्रकवि गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा चाजनयत् सतीजननुता यं मानितं सज्जनैः ।
[4]चारुस्तस्य कृतावजायत परिच्छेदस्तृतीयो [5]मही-
कन्योद्वाहसहोदरे [6]घनतरश्रीचित्ररत्नाकरे[7] ॥ ५६ ॥

इति चित्ररत्नाकरे तृतीयपरिच्छेदः समाप्तः ॥

---

१. 'प्तिः सानुराभाति सन्ततम् ।' ख. २. 'मन्थरा' ख. च.
३. 'रवारिधेः ।' ङ. ४. 'चारौ तस्य' ङ.
५. 'महा' ख. च. ६. 'घनरसे श्री' ग.
७. 'रे ॥ कृतौ चक्रकवेः सूनोरात्मा श्रीलोकनाथयोः ।
तृतीयोऽभूत् परिच्छेद श्चित्ररत्नाकरे वरे ॥
इति तृतीयः परिच्छेदः ।' ङ.

## चतुर्थः परिच्छेदः ।

अथ अक्षरच्युतकम्—

*अर्थेनाच्युतवर्णस्य च्युतवर्णपदस्य चेत् ।
अर्थस्य चारु साधर्म्यमक्षरच्युतकं हि तत् ॥ १ ॥

साकमच्युतवर्णेन साधर्म्यं कथितं यदि ।
च्युतवर्णस्य तत् प्राहुरक्षरच्युतकं बुधाः ॥ २ ॥

बिन्दुमात्राव्यञ्जनानां च्युतौ लक्षणमुन्नयेत् ।
[1]एवमच्युतबिन्द्वाद्यैस्तेषां साधर्म्यमीयते[2] ॥ ३ ॥

अथाक्षरच्युतकम् । तल्लक्षणमाह– अर्थेनेति । अत्र च्युतवर्णस्य पदस्येत्यर्थः । अर्थेन च्युतवर्णपदस्य सम्बन्धिनोऽर्थस्य चारु साधर्म्यमस्ति चेत् तदक्षरच्युतकम् । बिन्दुमात्राव्यञ्जनानां च्युतौ लक्षणमेवमेवोन्नयेत् । अच्युतबिन्दुना च्युतबिन्दुकस्य अच्युतमात्रेण च्युतमात्रस्य (अ)च्युतव्यञ्जनेन च्युतव्यञ्जनस्य साधर्म्ये तत्तत्संज्ञका भवन्तीत्यर्थः । अत्र चित्रचतुष्टये लक्ष्य-श्लोकास्तु केवलं नान्तर्लापिनः, न च केवलं बहिर्लापिनः तस्मादुभयरूपा इति द्रष्टव्यम् ॥

तत्राक्षरच्युतकं यथा—

---

* क. ख. ग. घ. च. पाठेषु पद्यमिदं नास्ति

---

१. ‘ तेषामच्युतबिन्द्वाद्यैरर्थसाधर्म्यमस्ति चेत् ’ ङ.
२. ‘ मीरितम् ’ ख. ग.

अधिष्ठितं द्विजकुलैः[1] शाखिभिः शिखिभिर्लसत् ।
सुमनोनिवहामोदं पुष्यत्[2] तद् भासते वनम् ॥ ४ ॥

॥ सवनं च ॥ १ ॥

अक्षरच्युतकमुदाहरति— अधिष्ठितमिति । अत्र वनमिति च्युताक्षरं सवनमित्यच्युताक्षरं तयोरेकं श्लोकस्यान्तर्वर्तते । अन्यत्तु श्लोकाद् बहिः । तयोर्द्विजकुलैरधिष्ठितमित्यादिश्लिष्टविशेषणैः साधर्म्यमवगन्तव्यम् । एवं नवसु लक्ष्यश्लोकेषु लक्षणमुन्नेयम् । अत्र परिच्छेदे अक्षरच्युतकादीनां चित्राणां प्रश्नोत्तरात्मकत्वं नास्ति ॥

दधदुद्दामसौरभ्यप्रफुल्लकमलोत्करम् ।
हंसश्रियं तथा बिभ्रदधिकं भासते सरः ॥ ५ ॥

॥ वासरश्च । अत्र दधद् बिभ्रदिति पदयोः पुन्नपुंसकसाधा-[3]
रण्येन चमत्कारः[4] ॥ २ ॥

दधदिति । अत्र सर इति च्युतवर्णं वासर इत्यच्युतवर्णं, पुंनपुंसकलिङ्गम् । ताभ्यामुभयसाधारणयोरन्वयश्चमत्कारकारी ॥

मृगैः खगैर्नगैर्नागैर्युक्तं च नरवानरैः ।
सरित्सरोद्रिसहितं वनमेतत् प्रकाशते ॥ ६ ॥

॥ भुवनं च ॥ ३ ॥

---

१. 'गणैः' ग. २. 'पुष्णत्' च.
३. 'पदद्वयं पुन्न' ङ. ४. 'चमत्कृतिः' ख, 'चमत्कारकारि' ङ.

मृगैरिति । अत्र वनं च्युतवर्णं भुवनमच्युतवर्णम् । अन्यत् पूर्ववत् ॥

प्राणिहिंसापरो[1] बिभ्रद् वाञ्छां रुधिरभोजने ।
धत्ते प्रकृत्या तीक्ष्णत्वं शरो लोकभयङ्करः ॥ ७ ॥

॥ आशरश्च ॥ ४ ॥

प्राणीति । अत्र शर आशरश्च तथा ॥

अतृप्तत्वं[2] दधल्लोकैराहृतैर[3]खिलैरपि ।
बिभ्रच्चलत्वं क्रूरत्वं[4] मनो याति समन्ततः ॥ ८ ॥

॥ शमनश्च[5] ॥ ५ ॥

अत्र पूर्ववत् लिङ्गद्वयसाधारण्यम् । एतानि च्युतादीनि ।

अतृप्तत्वमिति । अत्र मनः शमनश्च तथा । एतानि च्युतादीनि ॥

च्युतमध्यानि यथा—

प्रतापभूम्ना सहितो हेतिसंहतिसङ्कुलः ।
सदागमविरुद्धत्वं[6] बिभ्रद् दावः स वर्तते[7] ॥ ९ ॥

॥ दानवश्च ॥ ६ ॥

---

१. 'प्राणहिंसा' ङ.  २. 'अत्राप्तत्वं' ख. ग. ङ.

३. 'रावृत्तैर' च  ४. 'भुवने मनो' ग, 'क्रौर्यं च मनो' च. ङ.

५. 'श्च ॥ अत्रापि लिङ्गसाधारण्यम् । एतानि च्युतादीनि । च्युतमध्यानि यथा' ख; 'श्च ॥ एतानि च्युतादीनि । च्युतमध्यकं यथा' ग; 'श्च ॥ अत्रापि विशेषणद्वयं लिङ्गद्वयसाधारणम् । एतानि च्युतादीनि । च्युतमध्यानि यथा ॥ ङ; 'श्च ॥ अत्रापि पूर्ववत् पुन्नपुंसकसाधारण्यम् । एतानि च्युतादीनि । च्युतमध्यानि यथा' च.

६. 'त्वं वहन् दावः' ग.  ७. 'वर्धते' ख.

च्युतमध्यानि यथा– प्रतापेति । अत्र दावः दानवश्च ॥

निजसञ्चारतो देशं परिपूतं समाचरन् ।
जवेन महता युक्तो वायुरायाति सम्प्रति ॥ १० ॥

॥ वातायुश्च ॥ ७ ॥

निजेति । अत्र वायुः वातायुरिति ॥

नूतनाम्भोधरच्छाय[1]ः सर्वलोकभयावहः ।
निगृहीतः पुरा क्षिप्रं कालस्त्रिपुरशासिना ॥ ११ ॥

॥ काकोलश्च ॥ ८ ॥

नूतनेति । अत्र कालः काकोलश्च ॥

मरुद्भ्रमनदक्षाणां भोगिनां वसतीः शुभाः ।
चन्दनद्रुम[2]यीस्तन्वन् मय एष विराजते ॥ १२ ॥

॥ मलयश्च । ९ ॥

मरुदिति । अत्र मयः मलयः इति ॥

अथ च्युतान्तम्—

उपास्यमानोऽविरतं सामोदैः सुमनोगणैः ।
घनसङ्घनिभश्रीकः केशः स्फुरति स[3]म्प्रति ॥ १२ ॥

---

१. ‘ श्यामः ’ ङ. च. २. ‘ मयास्तन्वन् मयोऽयं स विराजते ’ ख. च.
३. ‘ साम्प्रतम् ’ ख. च.

॥ केशवश्च ॥ १० ॥

अथ च्युतान्तम् — उपास्येति । अत्र केशः केशवश्च ॥

बिन्दुच्युतकं यथा—

प्रदर्शयन्नितितरां विग्रहेषु[1] निजं बलम् ।
अगदो भासते[2] येन पररुक् प्रसभं हृता ॥ १४ ॥

॥ अङ्गदश्च ॥ १ ॥

अथ बिन्दुच्युतकम् । अत्राच्युतबिन्दुकस्य च्युतबिन्दुकस्य साधर्म्ये अर्थस्य बिन्दुच्युतकम् । उदाहरति यथेति— प्रदर्शयन्निति । अत्र अगद औषधम् । अङ्गदः बालिपुत्रः । उभयोर्विशेषणबलात्साधर्म्यमुन्नेयम् ॥

कामं द्विषन् द्विजगणान् मायया पीडयन् मुहुः ।
शबरस्तिष्ठति क्रूरो निन्दितो बुधमण्डलैः ॥ १५ ॥

॥ शम्बरश्च ॥ २ ॥

काममिति । अत्र शबरः शम्बरः ॥

स्वेदाम्बुभिः[3] स्मरभवैर्युक्तेन वरपाणिना ।
प्रगृहीते करे वध्वाः कटको भासतेतराम् ॥ १६ ॥

॥ कण्टकश्च ॥ ३ ॥

---

१. 'षु बलं सदा' ङ. २. 'राजते' ङ.
३. 'म्बुवस्मरभवैः' च.

खेदेति । अत्र कटकः कण्टकश्च ॥

जनयन्तः सुखं[1] निद्रां जनानां निजसेवया ।
कबला मार्दवोपेता[2] जयन्ति रुचिशालिनः ॥ १७ ॥

॥ कम्बलाश्च ॥ ४ ॥

जनयन्त इति । अत्र कबलाः कम्बलाश्च ॥

लङ्कापुरे यदुद्यानभजनं कपिना कृतम् ।
अश्रेयसो निदानं तदासीन्नक्तश्चरप्रभोः ॥ १८ ॥

॥ उद्यानभञ्जनं च ॥ ५ ॥

लङ्कापुर इति । अत्र उद्यानभजनम्, उद्यानभञ्जनं च ॥

दरं दधानोऽविरतमरिणा सङ्गतः पुनः ।
लोकेऽतिरिक्तो वीर्येण भगवानेष भासते[3] ॥ १९ ॥

॥ भङ्गवांश्च ॥ ६ ॥

दरमिति । अत्र भगवान् भङ्गवांश्च तथा ॥

सञ्चारं रचयन् शश्वद् विपुले वियदङ्कणे ।
अन्वितः पत्रवत्त्वेन विभाति पतगो[4] भृशम् ॥ २० ॥

---

१. 'सुखां' ख. ङ. च.    २. 'विभवोपेता' ख.
३. 'दृश्यते' ङ.    ४. 'पतगेश्वरः' ख.

॥ पतङ्गश्च ॥ ७ ॥

सञ्चारमिति । अत्र पतगः पतङ्गश्च ॥

असिदारितभूपालगज[1]वाजिभटावलिः ।
[2]अति[3]रिक्तां मही कुर्वन् [4]सगरोऽसौ वि[5]भासते ॥ २१ ॥

॥ सङ्गरश्च ॥ ८ ॥

असीति । अत्र सगरो राजविशेषः सङ्गरश्च ॥

चिकीर्षितं यद् गुरुणा यद् बुधेन विधित्सितम् ।
जनस्य निघ्नंस्तच्छ्रेयो मद [6]एष विराजते ॥ २२ ॥

॥ मन्दश्च ॥ ९ ॥

चिकीर्षितमिति । अत्र मदः मन्दश्च ॥

उत्पादितमहानादाः [7]कस्मिंश्चित् कारणे सति ।
मनोहरतराकारा [8]घंटा राजन्ति [9]सम्प्रति ॥ २३ ॥

॥ [10]घण्टाश्च ॥ १० ॥

---

१. ' वाजिरथाकुलाम् ' ख. च.
२. ' मही कुर्वन् महावेगः सगरः स विभासते ' ख.
३. ' रिक्तां ' ग. ४. ' सगरः स विभासते ' च.
५. ' विराजते ' ङ. ६. ' एव ' च.
७. ' कदाचित् कारणे ' ङ. च. ८. ' घटी राजति सम्प्रति ' ख.
९. ' साम्प्रताम् ' ङ. १०. ' घण्टी च ' ख.

मात्राच्युतकं यथा—

प्रकृष्टताया देशस्य यो बिभर्ति निदानताम् ।
आकाशसदृशच्छायः कासरोऽयं विराजते ॥ २४ ॥

॥ कासारश्च ॥ १ ॥

अथ मात्राच्युतकम् । अच्युतमात्रेण च्युतमात्रस्य साधर्म्ये मात्राच्युतकम् । प्रकृष्टेति । अत्र कासरः कासरश्च ॥

मनोहरवनोपेतो निरुद्धवियदङ्गणः ।
[1]पृथुलत्वं पुनर्बिभ्रद् भास[2]तेऽसौ धराधरः ॥ २५ ॥

॥ धाराधरश्च ॥ २ ॥

मनोहर इति । अत्र धराधरः धाराधरश्च ॥

[3]अनन्ताहितसञ्चाराः [4]शिञ्जन्मञ्जुलभूषणाः ।
नखरश्रीयुता भान्ति चरणा मार्दवान्विताः ॥ २६ ॥

॥ चारणाश्च ॥ ३ ॥

अनन्तेति । चरणाः चारणाश्च तथा ॥

प्रालम्बविलसत्तेजोहा[5]रिनिर्भरविक्रमः ।
गोधूळिधूसरतनुर्बल एष वि[6]राजते ॥ २७ ॥

---

१. ‘समुन्नतिं पुन’ ख. ङ. च. २. ‘ते स धरा’ ङ.
३. ‘वनान्ता’ ख. ४. ‘व्यञ्जन्मञ्जुल’ ख, ‘राजन्मञ्जुळ’ च.
५. ‘हारी’ ख. ग. च, ‘हार’ ङ. ६. ‘विशोभते’ च.

॥ बालश्च ॥ ४ ॥

प्रालम्बेति । अत्र बलो बालश्च तथा ॥

पद्मासनं विदधती मुखभासा मनोहरा[1] ।
जनयन्ती स्मरं भर्तुर्भासते नितरां रमा ॥ २८ ॥

॥ रामा च ॥ ५ ॥

पद्मेति । अत्र रमा रामा च ॥

चञ्चरीकावलिश्यामा वनौघाकलितस्थितिः ।
नेत्रासेचनकश्रीका कालिका भ्राजतेतराम्[2] ॥ २९ ॥

॥ कालिका च ॥ ६ ॥

चञ्चरीकेति । अत्र कलिका कालिका च ॥

कुन्देन्दुहिमगौरश्रीर्लसद्गुणगणान्वितः ।
हरो विभाति सुदृशां हृदयङ्गमतां दधत् ॥ ३० ॥

॥ हारश्च ॥ ६ ॥

कुन्देति । अत्र हरः हारश्च ॥

[3]विलसत्पुण्डरीकेण वनौघेन विराजितम् ।
अध्यासितं हंसकुलैर्[4]दृश्यते सरितां कुलम् ॥ ३१ ॥

---

१. 'मनोरमा' ङ.  २. 'राजते' ङ.
३. 'विकस' ग.  ४. 'कुलैर्वर्तते सरि' ङ.

॥ कूलं च ॥ ८ ॥

विलसदिति । अत्र वाहिनीकुलं वाहिनीकूलं च ॥

अदितेः प्रीतिमातन्वन् सञ्चारं कलयन् दिवि ।
छायया सहितोऽजस्रं सुर एष[1] विराजते ॥ ३२ ॥

॥ सूरश्च ॥ ९ ॥

अदितेरिति । अत्र सुरः सूरश्च ॥

[2]नवाम्भोदनिभच्छायो महाभोगविराजितः ।
विभूषितो रत्नरुचा नगोऽयं दृश्यते पुरः ॥ ३३ ॥

॥ नागश्च ॥ १० ॥

नवेति । अत्र नगो नागश्च तथा ॥

अथ व्यञ्जनच्युतकं[3] यथा—

समुल्लसत्कर्कटकमीनरा[4]शिविराजितम् ।
निर्मलत्वं पुनर्बिभ्रदम्बरं [5]भासते भृशम् ॥ ३४ ॥

॥ शम्बरं च ॥ १ ॥

अथ व्यञ्जनच्युतकम् । अत्राच्युतव्यञ्जनपदार्थेन च्युतव्यञ्जनपदार्थस्य साधर्म्ये व्यञ्जनच्युतकम् । यथा समुल्लसदिति । अत्राम्बरं शम्बरं च । अत्र

१. 'ष प्रकाशते' ख. च. २. 'नूतनाम्भोरुहच्छायो' ङ.
३. 'कम् । तद्यथा' ख. च. ४. 'राजि' ग.
५. 'भासतेऽधिकम्' ख. च; 'भासतेतराम्' ङ.

शकारस्य व्यञ्जनस्य च्युतौ अम्बरमिति भवति ॥

अवाप्ततापानुभवैरापाटलविलोचनैः ।
क्लेशेन महता युक्तैरोदनं क्रियते जनैः ॥ ३५ ॥

॥ रोदनं च ॥ २ ॥

अवाप्तेति । अत्र ओदनं रोदनं च ॥

स्वसम्पर्केण शीतार्तान् कलयन् [1]निखिलान् जनान् ।
वर्धितोऽम्भोमुचां गुम्भैरासारः परिदृश्यते ॥ ३६ ॥

॥ कासारश्च ॥ ३ ॥

स्वेति । अत्र आसारः कासरश्च तथा ॥

[2]अवमत्य चरन् वायुं विलसन्मणिभूषणः ।
उरगो राजते सोऽयं किश्वाश्वतरवंशजः ॥ ३७ ॥

॥ तुरगश्च ॥ ४ ॥

अवमत्येति । अत्रोरगस्तुरगश्च ॥

निजेन तेजसा रक्षन् निर्मलं भुवनं सदा ।
धूतवैरितमःश्रेणिररुणोऽयं [3]प्रकाशते ॥ ३८ ॥

॥ वरुणश्च ॥ ५ ॥

---

१. 'सकलान्' ख. ङ. च. २. 'अगणय्य' क. ख. ग. च.
३. 'विराजते' ङ.

निजेनेति । अत्र अरुणो वरुणश्च तथा ॥

विलोलवालव्यजनैर्वीजितोभयपार्श्वभूः[1] ।
सवनेषु चरन्नुच्चैरमरोऽयं विभासते[2] ॥ ३९ ॥

॥ चमरश्च ॥ ६ ॥

विलोलेति । अत्रामरश्चमरश्च ॥

अनिशं त्रिदशैः साकमप्सरोभिर्निषेवितः ।
मदरागप्रभवभूरासवः[3] खलु दृश्यते ॥ ४० ॥

॥ वासवश्च ॥ ७ ॥

अनिशमिति । अत्रासवो वासवश्च ॥

मरुत्स्वरूपतोपेता लोकानां हितकारिणः ।
स्वस्थानसञ्चाररता विलसन्त्यसवो[4] भृशम्[5] ॥ ४१ ॥

॥ वसवश्च ॥ ८ ॥

मरुदिति । अत्र असवो वसवश्च ॥

जनानां सुखसञ्चारे निदानत्वं[6] सदा दधत् ।
साधनं[7] विषयप्राप्तावयनं ननु शोभते ॥ ४२ ॥

---

१. ' नपरिशोभितपार्श्वभूः ' ङ. २. ' रोऽसौ विराजते ' ख. च.
३. ' प्रसव ' ग. ४. ' सवोऽसौ विराजते ' ङ.
५. ' वोऽधिकम् ' ङ. ६. ' सदानत्वं ' ख. च.
७. ' साधकं ' ग. ङ. च.

॥ नयनं च ॥ ९ ॥

जनानामिति । अत्रायनं नयनं च ॥

महाग्रहत्वं बिभ्राणः पीडयन्नखिलं[1] जगत् ।
वृषाकपिसमुद्भूतः सोऽयमारः[2] प्रकाशते ॥ ४३ ॥

॥ मारश्च ॥ १० ॥

महाग्रहत्वमिति । अत्र आरः मारश्च तथा ॥

अथ समस्तव्यस्तरूपम्[3]—

[4]विशेषणेषु विविधेष्वेकमप्याश्रयेत चेत् ।
समस्तव्यस्तरूपत्वं तदाख्यं[5] तद् बुधा विदुः ॥ ४४ ॥

तद्यथा—

सुधामयूखप्रमुखा ग्रहास्तारागणास्तथा ।
निशान्विताः प्रकाशन्ते नितरां वियदङ्कणे ॥ ४५ ॥

॥ अत्र निशान्विता इति[6] विशेषणं समस्तव्यस्तरूपकम्[7] ॥ १ ॥

अथ समस्तव्यस्तरूपाख्यं चित्रम् । तल्लक्षणमाह— **विशेषणेष्विति** । अनेकेषु विशेषणेषु एकमपि विशेषणं समस्तव्यस्तरूपत्वमाश्रयेत चेत् तच्चित्रं समस्तव्यस्तरूपाख्यं भवति । उदाहरति— यथेति । सुधेति । चन्द्रप्रमुखा ग्रहास्तारागणाश्च निशान्विताः प्रकाशन्त इति पदयोजना । अत्र निशान्विता

---

१. ‘ यन्निखिलं ’ ख. च.  २. ‘ मारो विराजते ’ ङ.  ३. ‘ रूपकम् ’ ग.

४. विशेषणानां निवहे यद्येकमपि संश्रयेत् ’ क. ‘ विशेषणानां निवहो यद्येकं वापि संश्रयेत् ’ ख. ‘ विशेषणानां निकरे यद्येकमपि संश्रयेत् ’ ग. ‘ विशेषण-विशेष्येषु यद्येकमपि संश्रयेत् ’ च.  ५. ‘ तदाख्यातं बुधा ’ ख.

६. ‘ इति समस्त ’ ग.  ७. ‘ रूपम् ’ ङ. च.

इति विशेषणं समस्तव्यस्तरूपम् । निशया अन्विता इति समस्तरूपम् । निशा रात्र्या, शकारान्तशब्दस्तृतीयान्तः । अत्र दश लक्ष्यश्लोका अन्तर्लापिनः ॥

[1]चक्षुरानन्दने चन्द्रः सौन्दर्ये पुष्पसायकः ।
धरणीवल्लभमणिर्भासते रुचिभास्करः ॥ ४६ ॥

॥ अत्र रुचिभास्कर इति विशे[2]षणं तादृशम् ॥ २ ॥

चक्षुरिति । अत्र रुचिभास्कर इति विशेषणं समस्तव्यस्तकरूपम् । रुचौ भास्कर इति रुचिभास्करः इति समस्तरूपं; रुचि दीप्तौ, चकारान्तोऽयं सप्तम्यन्तः शब्दः ॥

अभ्यस्तवेदवेदाङ्गशास्त्रकाव्यकलाकुलाः ।
[3]वाचान्विताः बुधजनाः प्रकाशन्ते धरातले ॥ ४७ ॥

॥ अत्र [4]वाचान्विता इ[5]ति विशेषणं तादृशम् ॥ ३ ॥

अभ्यस्तेति । अत्र वाचान्विता इति विशेषणं समस्तव्यस्तरूपम् । एकत्र वाचाशब्दः, अन्यत्र वाक्शब्दः ॥

पदाकलितसञ्चारा नराश्च पशवस्तथा ।
[6]वर्तन्ते भूमिवलये सुखदुःखसमन्विताः ॥ ४८ ॥

॥ अत्र पदाकलितसञ्चारा इति विशेषणं तादृशम् ॥ ४ ॥

पदेति । अत्र पदाकलितसञ्चारा इति विशेषणं तादृशम् । एकत्र पदेन, अन्यत्र पदा इति ॥

क्रमाद् गन्तुं वहन्निच्छामखिलं राशिमण्डलम् ।

---

१. 'चक्षुःप्रीतिकृतौ चन्द्रः' ङ. २. 'षणं समस्तव्यस्तरूपम्' ख
३. 'वाचायुता' क. ख. ग च. ४. 'वाचायुता' क ख. ग. च.
५. 'इति तथा ॥' ख. ६. 'वसुन्धरायां वलये विलसन्ति समन्ततः ॥' ङ.

मासाकलितसङ्क्रान्तिर्मार्तण्डोऽयं [1]प्रकाशते ॥ ४९ ॥

॥ अत्र मासाकलितं[2] इति विशेषणं तादृशम् ॥ ५ ॥

क्रमादिति । अत्र मासाकलितसङ्क्रान्तिरिति विशेषणं तादृशम् । मासा मासेनेत्यर्थः । अन्यत्र मासेन ॥

क्षिप्तामरावतीशोभा विनिर्धूताळकामदा ।
[3]विभाति काशी फणिनां पुरश्रीगर्वहारिणी ॥ ५० ॥

॥ अत्र [4]पुरश्रीगर्वहारिणीति विशेषणं तादृशम् ॥ ६ ॥

क्षिप्तेति । अत्र पुरश्रीगर्वहारिणीति पदं तादृशम् । पुरस्य श्रीः पुरश्रीः इति समस्तम् । पुर इति षष्ठी, तस्याः श्रीस्तद्गर्वहारिणीति व्यस्तरूपम् ॥

पुलोमपुत्रीरमणप्रमुखा निखिला अपि ।
सुधान्धसो दिक्पतयो दिशायुक्ताश्चकासति ॥ ५१ ॥

॥ अत्र दिशायुक्ता इति विशेषणं तादृशम् । ७ ॥

पुलोमेति । अत्र दिशायुक्ता इति विशेषणं तादृशम् । क्वचिद् दिशाशब्दः । क्वचिद् दिक्शब्दः ॥

*[5]क्षुधार्दिता दीनदीना मानुषा जगतीतले ।
कार्याकार्ये न जानन्ति भक्ष्याभक्ष्ये च नैव ते ॥ ५२ ॥

॥ अत्र [6]क्षुधार्दिता इति विशेषणं तादृशम् ॥ ८ ॥

* 'द्वाराहित '(श्लो०, सं०. ५३ )इत्यनन्तरमयं श्लोकः ख. ग. ङ. च. पाठेषु.

१. 'विराजते' ॥ ङ २. 'तत्संक्रान्तिरिति विशे' ग. ङ. च.

३. 'वसुन्धरायां राजन्ते पुरश्रीर्भासतेतराम्' च.

४. 'तुरीयपादं विशेषणम्' ॥ ग, 'पुरश्रीरिति विशेष्यं तादृशम् ॥' च.

५. 'क्षुधान्विता दीनमुखा मानु' ख. ६. 'क्षुधान्विता' ख.

क्षुधेति। अत्र क्षुधार्दिता इति विशेषणं तादृशम्। क्वचित् क्षुधाशब्दः, क्वचित् क्षुच्छब्दः॥

द्वाराहितप्रवेशो[1]ऽयं जनो नानाविधः सुखम्।
आस्थानमण्डपगतं सेवते धरणीपतिम्॥ ५३॥

॥ अत्र द्वाराहितप्रवेश इति विशेषणं तादृशम्॥ ९॥

द्वाराहित इति। अत्र द्वाराहितप्रवेश इति विशेषणं तादृशम्। क्वचिद् द्वारमित्यकारान्तः। क्वचिद् द्वारेति रेफान्तः॥

तृषातुराः शुष्ककण्ठ[2]रसनाधरतालवः।
अपि पल्वलवारीणि पङ्किलानि [3]पिबन्त्यहो॥ ५४॥

॥ [4]अत्र तृषातुरा इति विशे[5]षणं समस्तव्यस्तरूपम्॥ १०॥

तृषेति। अत्राकारान्तं समस्तम्। षकारान्तं व्यस्तम्।

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा चाजनयत् सतीजननुता यं मानितं सज्जनैः।
तुर्योऽजायत तत्कृताविह परिच्छेदो[6] महान् रुक्मिणी-
कल्याणानुजतां गते घनतरश्रीचित्ररत्नाकरे॥ ५५॥

इति श्रीचित्ररत्नाकरे
चतुर्थपरिच्छेदः
समाप्तः॥

---

१. 'शोऽसौ गृहान्तर्वर्तते गृही। पुत्रैर्मित्रैः कलत्रैश्च सङ्गतोऽनुभवन् सुखम्॥' ङ २. 'रदाजिह्वाधरास्तु ये' च. ३. 'पिबन्ति ते' च.

४. 'प्रथमशब्दः विशेषणम्। पूर्वश्लोके प्रथमः शब्दः॥" ग.

५. 'षणं तादृशम्॥" ङ. ६. 'दो विदर्भेन्दुजाकल्याणावरजे मनोहरतरश्रीचित्ररत्नाकरे॥ कृतौ चक्रकवेः सूनो रमाश्रीलोकनाथयोः। चतुर्थोऽभूत् परिच्छेदश्चित्ररत्नाकरे वरे'॥ ङ, दो विदर्भात्मजाकल्या' ख. च.

अथ तुल्यार्थाक्षरच्युतकादीनि—

> तुल्यार्थकं पदं यद्यद्वर्णादीनां च्युतावपि ।
> तुल्यार्थतत्तच्च्युतकसंज्ञां[1] तत्तत्पदं भजेत्[2] ॥ १ ॥

तुल्यार्थाक्षरच्युतकादीनि । तल्लक्षणमाह– तुल्यार्थकमिति । यद्यत्पदं वर्णादीनां वर्णमात्राबिन्दुव्यञ्जनार्धानां च्युतावपि अन्यैरच्युतवर्णादिभिस्तुल्यार्थकं तत्तत्पदं तुल्यार्थतत्तच्च्युतकसंज्ञां भजेत् । तत्तच्च्युतकसंज्ञामिति तुल्यार्थवर्णच्युतकतुल्यार्थमात्राच्युतकतुल्यार्थबिन्दुच्युतकतुल्यार्थव्यञ्जनच्युतकं तुल्यार्थार्धच्युतकसंज्ञामित्यर्थः । अत्र पञ्चाशल्लक्ष्यश्लोका बहिर्लापिनः ।

तत्र[3] तुल्यार्थवर्णच्युतकं यथा—

> समानवेगो मरुता वर्ण्यते कः कवीश्वरैः ।
> च्युतेऽपि वर्णे तुल्यार्थं पदं वाच्यमिहोत्तरम् ॥ २ ॥

॥ तुरङ्गः, तुरङ्गमः ॥ १ ॥

तत्र तुल्यार्थवर्णच्युतकमुदाहरति– यथेति । समानेति । कः कवीश्वरैः मरुता समानवेगो वर्ण्यते इति प्रश्नः । च्युतेऽपि वर्णे तुल्यार्थं पदमिहोत्तरं वाच्यम् । अत्र तुरङ्गमपदेन अच्युतवर्णेन तुल्यार्थकच्युतवर्णं तुरङ्ग

---

१. 'संज्ञं' ख. च.  २. 'भवेत्' ख. च., 'व्रजेत्' ग.
३. 'तद्यथा' ग.

इति पदमुत्तरम् । अत्र दशानां लक्ष्यश्लोकानां 'च्युतेऽपि वर्णे तुल्यार्थं पदं वाच्यमिहोत्तरम्' इत्येतदुत्तरार्धम् ॥

तरङ्गिणीनाथमयीं धत्ते[1] का खलु मेखलाम् ।
च्युतेऽपि वर्णे० ॥ ३ ॥

॥ पृथ्वी, पृथिवी, । अत्र[2] इवर्णस्य लोपः ॥ २ ॥

तरङ्गिणीति । प्रश्नः स्पष्टः । उत्तरं पृथ्वीति पदं च्युतवर्णं, तच्चा-च्युतवर्णेन पृथिवीपदेन तुल्यार्थम् । अत्र इवर्णस्य च्युतिः ॥

उत्पादयति को भीतिं जनानां निजदर्शनात् ।
च्युतेऽपि वर्णे० ॥ ४ ॥

॥ भुजङ्गः, भुजङ्गमः ॥ ३ ॥

उत्पादयतीति । अत्र भुजङ्गभुजङ्गमपदे च्युताच्युतवर्णे ॥

अयत्नं[3] सञ्चरति को निरालम्बे नभःस्थले ।
च्युतेऽपि वर्णे० ॥ '५ ॥

॥ विहङ्गः, विहङ्गमः ॥ ४ ॥

अयत्नमिति । अत्र विहङ्गविहङ्गमपदे च्युताच्युतवर्णे ॥

---

१. ' धत्ते का मेखलां सदा ' ङ.

२. ' अत्र च्युतिरिवर्णस्य ' ङ. च.

३. ' सुखेन स ' क. ख. ग. च.

को वा[1] गजास्यावयवो भ्रमद्भ्रमरशोभितः ।
च्युतेऽपि वर्णे० ॥ ६ ॥

॥ कटः, करटः ॥ ५ ॥

क इति । अत्र कटः करट इति पदे च्युताच्युतवर्णे ॥

सुधाशन*समूहानामावासत्वं बिभर्ति कः ।
च्युतेऽपि वर्णे० ॥ ७ ॥

॥ मेरुः, सुमेरुः ॥ ६ ॥

सुधेति । अत्र मेरुः सुमेरुः इति पदे च्युताच्युतवर्णे ॥

पादविन्यासरहिता का[3] दानवविरोधिनाम् ।
च्युतेऽपि वर्णे० ॥ ८ ॥

॥ क्ष्मा, क्षमा । अत्र अवर्णस्य[4] च्युतिः ॥ ७ ॥

पादेति । अत्र क्ष्मा क्षमेति पदे च्युताच्युतवर्णे । अत्र अवर्णस्य च्युतिः ॥

उन्मूलनं विधत्ते को धरणीरुहसंहतेः ।
च्युतेऽपि वर्णे० ॥ ९ ॥

---

* 'शन' इत्यारभ्य 'क्षमा '(P 113 line 11) इत्यन्तं गपाठे लुप्तम् ।

---

१. 'वारणस्यावयवो' क. २. 'कटक:' ख. च.
३. 'कानना स्याद्विरोधिनाम्' ख. च.
४. 'अकारस्य' क., 'अवर्णच्युतिः' ख. च.

## ॥ समीरः, समीरणः ॥ ८ ॥

उन्मूलनमिति। अत्र समीरः समीरण इति पदे तादृशे ॥

आवासतां वहति को निकरस्य पतत्रिणाम्।
च्युतेऽपि वर्णे० ॥ १० ॥

## ॥ अगः, अगमः ॥ ९ ॥

आवासेति। अत्र अगः अगमः इति पदे तादृशे ॥

क्षणदाचर[1]लोकस्य भक्ष्यभावं बिभर्ति किम्।
च्युतेऽपि वर्णे० ॥ ११ ॥

## ॥ पलं, पललम् ॥ १० ॥

क्षणदेति। अत्र पलं पललमिति पदे च्युताच्युतवर्णे ॥

तुल्यार्थमात्राच्युतकं यथा—

किं साधनमभूदिन्द्रसूनोर्विद्विषतां वधे।
मात्राच्युतावपि पदं तुल्यार्थं स्यादिहोत्तरम् ॥ १२ ॥

## ॥ गाण्डिवं, गाण्डीवम् ॥ १ ॥

*अथ तुल्यार्थमात्राच्युतकं यथा— किमिति। इन्द्रसूनोरर्जुनस्य विद्विषतां* वधे किं साधनमभूदिति प्रश्नः। 'मात्राच्युतावपि भवेत्तुल्यार्थं पदमुत्तरम्' इतीदं

---

१. 'रलङ्कस्य' ङ.

दशलक्ष्यश्लोकानामुत्तरार्धम् । अत्र च्युताच्युतमात्रे (गाण्डिव) गाण्डीवपदे ॥

निर्गन्धैरपि कः पुष्पैरर्चितः प्रीतिमश्नाति ।
मात्राच्युतावपि० ॥ १३ ॥

। गिरिशः, गिरीशः ॥ २ ॥

निर्गन्धैरिति । अत्र गिरिशगिरीशपदे च्युताच्युतमात्रे ॥

हुताशनेन सार्धं कः सौहार्दं[1] वहते सदा ।
मात्राच्युतावपि० ॥ १४ ॥

॥ गन्धवहः, गन्धवाहः ॥ ३ ॥

हुताशनेनेति । अत्र गन्धवहगन्धवाहपदे च्युताच्युतमात्रे ॥

वनानि शुष्काशुष्काणि निर्दग्धुं कः प्रगल्भते ।
मात्राच्युतावपि० ॥ १५ ॥

। दवः, दावः ॥ ४ ॥

वनानीति । अत्र दवः दावः इति पदे तादृशे ॥

किं विराजति कस्तूरीतिलकस्य समर्पणात् ।
मात्राच्युतावपि० ॥ १६ ॥

॥ अळिकं, अळीकम् ॥ ५ ॥

---

१. 'सहायं' ख. च.

किमिति । अत्राळिकमळीकमितिपदे तादृशे ॥

अम्भोजलोचनायाः कः सम्भोगैः प्रीतिमञ्चति ।
मात्राच्युतावपि० ॥ १७ ॥

॥ अभिकः, अभीकः ॥ ६ ॥

अम्भोजेति । अत्राभिकः अभीक इति पदे तादृशे ॥

सति कारणपौष्कल्ये को बीजादुद्भवं व्रजेत् ।
मात्राच्युतावपि० ॥ १८ ॥

॥ अङ्कुरः, अङ्कूरः ॥ ७ ॥

सतीति । अत्राङ्कुरः अङ्कूर इति पदे च्युताच्युतमात्रे ॥

तरुणीजनसौन्दर्यदर्शनं कोऽभिवाञ्छति ।
मात्राच्युतावपि० ॥ १९ ॥

॥ पुरुषः, पूरुषः ॥ ८ ॥

तरुणीति । अत्र पुरुषः पूरुष इति पदे च्युताच्युतमात्रे ॥

जायते काधिवदनं कोपस्य प्रभवे सति ।
मात्राच्युतावपि० ॥ २० ॥

॥ भ्रुकुटिः, भ्रूकुटिः ॥ ९ ॥

जायत इति । अत्र भ्रुकुटिः भ्रूकुटिरिति पदे तादृशे ॥

गोमयेन वितन्वन्ति गोमुखं कुत्र बालिका[1]ः ।
मात्राच्युतावपि० ॥ २१ ॥

॥ प्रघणे, प्रघाणे ॥ १० ॥

गोमयेनेति । अत्र प्रघणे प्रघाणे इति पदे तादृशे ॥

अथ तुल्यार्थबिन्दुच्युतकम् । तद्यथा—

तरङ्गिणीनां रमणः कीदृशो जगतीतले ।
च्युतेऽपि बिन्दौ तुल्यार्थं पदं वाच्यमिहोत्तरम् ॥ २२ ॥

॥ गभीरः, गम्भीरः ॥ १ ॥

अथ तुल्यार्थबिन्दुच्युतकमुदाहरति यथेति— तरङ्गिणीनामिति । अत्र गभीरः गम्भीर इति पदे च्युताच्युतबिन्दुके ॥

रूपं शब्दं तथा गृह्णात्येकेन करणेन कः ।
च्युतेऽपि बिन्दौ० ॥ २३ ॥

॥ भुजगः, भुजङ्गः ॥ २ ॥

रूपमिति । अत्र भुजगो भुजङ्ग इति पदे च्युताच्युतबिन्दुके ॥

वर्तन्ते भुवने के वा धरणीरुहसंश्रयाः ।
च्युतेऽपि बिन्दौ० ॥ २४ ॥

---

१. 'चलिकाः' ख. च.

॥ पतगाः, पतङ्गाः ॥ ३ ॥

वर्तन्त इति । अत्र पतगाः पतङ्गा इति पदे तादृशे ॥

अजस्रपदपर्यायपदत्वं किं समश्नुते ।
च्युतेऽपि बिन्दौ० ॥ २५ ॥

॥ सततं, सन्ततम् ॥ ४ ॥

अजस्रेति । अत्र सततं सन्ततमितिपदे तादृशे ॥

गतिभेदेषु चातुर्यं वहते भुवनेषु कः ।
च्युतेऽपि बिन्दौ० ॥ २६ ॥

॥ तुरगः, तुरङ्गः ॥ ५ ॥

गतीति । अत्र तुरगस्तुरङ्ग इति पदे तादृशे ॥

अण्डात् को भजते जन्तुर्जननं जगतीतले ।
च्युतेऽपि बिन्दौ ॥ २७ ॥

॥ विहगः, विहङ्गः ॥ ६ ॥

अण्डादिति । अत्र विहगः विहङ्ग इति पदे तादृशे ॥

अवहन् के निपुणतां राक्षसानां निषूदने ।
च्युतेऽपि बिन्दौ ॥ २८ ॥

॥ प्लवगाः, प्लवङ्गाः ॥ ७ ॥

अवहन्निति । अत्र प्लवगाः प्लवङ्गा इति पदे तादृशे ॥

भुञ्जते के प्रहर्षेण नराणां मांससञ्चयान् ।
च्युतेऽपि बिन्दौ० ॥ २९ ॥

॥ रात्रिचराः, रात्रिञ्चराः ॥ ८ ॥

भुञ्जत इति । अत्र रात्रिचरा रात्रिञ्चरा इति पदे च्युताच्युतबिन्दुके ॥

बहिर्मुखाः सुधां प्राप्ताः किं कृत्वा क्षीरसागरे ।
च्युतेऽपि बिन्दौ० ॥ ३० ॥

॥ मथनं, मन्थनम् ॥ ९ ॥

बहिर्मुखा इति । अत्र मथनं मन्थनमिति पदे तादृशे ॥

*वीरः प्रयुङ्क्ते विमते कीदृशीं शरमण्डलीम् ।
च्युतेऽपि बिन्दौ० ॥ ३१ ॥

॥ तुदतीं, तुदंतीम् ॥ १० ॥

वीर इति । अत्र तुदतीं तुदन्तीमिति पदे च्युताच्युतबिन्दुके । अत्र 'च्युतेऽपि बिन्दावन्येन तुल्यार्थं पदमुत्तरम्' इतीदं तुल्यार्थबिन्दुच्युतलक्ष्यश्लोकानां दशानामुत्तरार्धम् ॥

अथ तुल्यार्थव्यञ्जनच्युतकम्[1] । तद्यथा[2]—

---

* इदं ख ग च पाठेषु नास्ति ।

---

१. 'कम् । को विषाण' ग. २. 'यथा' ख.

**को विषाणककुत्सास्नालाङ्गूलखुरसंयुतः ।**
**च्युतावपि व्यञ्जनस्य तुल्यार्थं पदमुत्तरम् ॥ ३२ ॥**

**॥ ऋषभः, वृषभः ॥ १ ॥**

अथ व्यञ्जनच्युतकमुदाहरति **यथेति** । **क** इति । 'च्युतावपि व्यञ्जनस्य तुल्यार्थं पदमुत्तरम्' इति तुल्यार्थव्यञ्जनच्युतकलक्ष्यश्लोकानां दशानामिदमेव उत्तरार्धम् । अत्र ऋषभः वृषभः इति च्युताच्युतव्यञ्जने पदे ॥

**वर्षे महति सञ्जाते कीदृशं भूतलं भवेत् ।**
**च्युतावपि० ॥ ३३ ॥**

**॥ आर्द्रं, सार्द्रम् ॥ २ ॥**

**वर्ष** इति । अत्रार्द्रं सार्द्रमिति पदे च्युताच्युतव्यञ्जने ॥

**न व्रजेच्चलनं वाति प्रचण्डे कः प्रभञ्जने ।**
**च्युतावपि० ॥ ३४ ॥**

**॥ अगः, नगः ॥ ३ ॥**

**नेति** । अत्र अगः नगः इति पदे तादृशे ॥

**साभिलाषो भवति कः शारदाकिलिकिञ्चिते ॥**
**च्युतावपि० ॥ ३५ ॥**

**॥ अः, कः ॥ ४ ॥**

**साभिलाष** इति । अत्र अः कः इति पदे तादृशे ॥

पङ्क्तिशब्दस्य पर्यायपदत्वं किं समश्नुते ।
च्युतावपि० ॥ ३६ ॥

॥ [1]आलिः, पालिः ॥ ५ ॥

पङ्क्तीति । अत्रालिः पालिरिति पदे तादृशे ॥

प्रयुज्यते किं समरे वीरेण परिपन्थिषु ।
च्युतावपि० ॥ ३७ ॥

॥ अस्त्रं, शस्त्रम् ॥ ६ ॥

प्रयुज्यत इति । अत्रास्त्रं शस्त्रमिति पदे च्युताच्युतव्यञ्जने ॥

कीदृशं यातुधानानां दर्शनं जगतीतले ।
च्युतावपि० ॥ ३८ ॥

॥ भीमं, भीष्मम् ॥ ७ ॥

कीदृशमिति । अत्र भीमं भीष्ममिति पदे तादृशे ॥

कीदृशं दारु वक्रत्वं विहायार्जवमञ्चति ।
च्युतावपि० ॥ ३९ ॥

॥ तष्टं, त्वष्टम् ॥ ८ ॥

कीदृशमिति । अत्र तष्टं त्वष्टमिति पदे तादृशे ॥

---

१. 'आली, पाली' ङ.　　　२. 'तक्षं, त्वक्षम्' च.

भुवने कस्तमस्तोमनिषूदनविचक्षणः ।
च्युतावपि० ॥ ४० ॥

॥ अविः, रविः ॥ ९ ॥

भुवन इति । अत्र अविः रविः इति पदे तादृशे ॥

भिनत्ति किं सायकेन धन्विनामग्रतःसरः ।
च्युतावपि ॥ ४१ ॥

॥ लक्षं, लक्ष्यम् ॥ १० ॥

भिनत्तीति । अत्र लक्षं लक्ष्यमिति पदे च्युताच्युतव्यञ्जने ॥

अथ तुल्यार्थार्धच्युतकम्[1] । तद्यथा[2]—

यूनां मनांसि युवतेः किमाकर्षति सत्वरम् ।
अर्धे च्युतेऽपि[3] तुल्यार्थं पदं वाच्यमिहोत्तरम् ॥ ४२ ॥

॥ रूपं, रूपधेयम् ॥ १ ॥

अथ तुल्यार्थार्धच्युतकम् । यूनामिति । अत्र 'अर्धे च्युतेऽपि तुल्यार्थं पदं वाच्यमिहोत्तरम्' इत्येकं दशलक्ष्यश्लोकानामुत्तरार्धम् । अत्र रूपं रूपधेयमिति पदे च्युताच्युतार्धे ॥

---

१. 'कम् । यूनां ' ग. २. 'यथा ' ख.

३. 'अर्धच्युते ' ङ.

अब्धिमेखलया[1] युक्ता का लसद्रत्नजालया ।
अर्धे च्युतेऽपि० ॥ ४३ ॥

॥ धरा, वसुन्धरा ॥ २ ॥

अब्धिमेखलयेति । अत्र धरा वसुन्धरा इति पदे च्युताच्युतार्धे ॥

कस्तमस्तोमवेतण्डघटादलनकेसरी ।
अर्धे च्युतेऽपि० ॥ ४४ ॥

॥ भानुः, चित्रभानुः[2] ॥ ३ ॥

क इति । अत्र भानुश्चित्रभानुरिति पदे च्युताच्युतार्धे ॥

सन्तापं कः शमयति च्छाययाध्वगसंहतेः ।
अर्धे च्युतेऽपि० ॥ ४५ ॥

॥ द्रुः, द्रुमः ॥ ४ ॥

सन्तापमिति । अत्र द्रुः द्रुम इति पदे तादृशे ॥

अलङ्करोति काजस्रं चतुर्भुजभुजान्तरम् ।
अर्धे च्युतेऽपि० ॥ ४६ ॥

॥ मा, रमा ॥ ५ ॥

---

४. ' काञ्च्याब्धिमय्या सहिता ' क. ख. ग. च.
५. ' चण्डभानुः ' क. ख. ग. च.

प्रदा देवगवी– का देवगवी अमितार्थप्रदा इति प्रश्नः । देवगवी कामधेनुः कामितार्थप्रदा काङ्क्षितार्थप्रदेत्युत्तरम् । किं शुकवद् वनं– शुकवद् वनं किमिति प्रश्नः । किंशुकवत् पलाशद्रुमसहितं वनमित्युत्तरम् ॥

**अलिः श्रयति कंकेलिं कामाज्ञां कलयेद् युवा ॥ ५४ ॥**

अलिः श्रयति कंकेलिम्– कं केलिं 'द्रवः केलिः परीहासः' इत्यमरः । कां क्रीडां श्रयतीत्यर्थः । इति प्रश्नः । अलिः कंकेलिमित्युत्तरम् । कामाज्ञां कलयेद् युवा– काम् आज्ञां युवा कलयेदिति प्रश्नः । कामाज्ञां मन्मथाज्ञां युवा कलयेदित्युत्तरम् ।

**अथ भेदकभेद्यकम् ।**

**प्रश्नयोर्भेदकं भेद्यं द्विधा भूत्वोत्तरं वदेत् ।**
**अर्थान्तरं चाखण्डं चेद्यत्तद्भेदकभेद्यकम् ॥ ५५ ॥**

अथ भेदकभेद्यं नाम चित्रम् । तल्लक्षणमाह– **प्रश्नयो**रिति । यदुत्तरमुत्तरत्वेन कल्पितं शब्दरूपं द्विधा भूत्वा स्वयं द्विधा भवत् प्रश्नयोः सम्बन्धि भेदकं विशेषणं भेद्यं विशेष्यं च वदेत् पृथङ्निर्दिशेत् तदेवोत्तरमखण्डमर्थान्तरं च वदेच्चेत् तच्चित्रं भेदकभेद्यसंज्ञं भवति ॥

**तद्यथा—**

**सदग्रहारो वहते कीदृशीं कां धरातले ।**
**बिभर्ति हरिणाक्षीणां कां विलोचनयोर्द्वयम् ॥ ५६ ॥**

**॥ महितां जनताम् , महिताञ्जनताम ॥ १ ॥**

उदाहरति– **तद्यथे**ति । अत्र चित्रे पूर्वार्धे भेदकभेद्यप्रश्नौ । उत्तरार्धे अर्थान्तरप्रश्न इति ज्ञेयम् । त्रिंशल्लक्ष्यश्लोकाः ॥

प्रसन्नवदनाम्भोजः कीदृशः को भवेद् भुवि ।
विश्वम्भरा कीदृशी स्याद् वारिदे वारि वर्षति ॥ ५७ ॥

॥ समुत् ना, समुन्ना ॥ २ ॥

कीदृशीं कां भीमसेनो जग्राहारिवधोद्यतः ।
भुजयोर्युगलीं धत्ते कीदृशीं तरुणीजनः ॥ ५८ ॥

॥ दृढां गदाम्, दृढाङ्गदाम् ॥ ३ ॥

आस्वाद्यते कीदृशं किं सरसं भोजने जनैः ।
वसुन्धराया[1] वलयं कीदृशं वर्तते पुनः ॥ ५९ ॥

॥ समहः दधि, समहोदधि ॥ ४ ॥

कीदृशीं कामरण्यानी पुष्णाति फलसञ्चयैः ।
पाञ्चाली मध्यभू राज्ञां सभायां कामजीजनत् ॥ ६० ॥

॥ विचित्रां शुकराजिम्, विचित्रांशुकराजिम् ॥ ५ ॥

**कीदृशीमिति** । अरण्यानी महारण्यं फलसञ्चयैः कीदृशीं कां पुष्णाति । अत्र कीदृशीमिति भेदकविषयः प्रश्नः । कामिति भेद्यविषयः । राज्ञां सभायां पाञ्चाली मध्यभूः कामजीजनदिति अर्थान्तरविषयः प्रश्नः । अस्मिन् प्रश्नत्रये विचित्रां शुकराजिमित्युत्तरम् । अत्र विचित्रां नानावर्णां शुकराजिं शुकपङ्क्तिमिति भेदकभेद्ययोरुत्तरे । विचित्राणामंशुकानां राजिमित्यखण्डत्वेनार्थान्तरस्योत्तरम् ॥

---

१. ‘ समं धराया ’ ख. च.

पिपासवः कीदृशं कं नानुधावन्ति षट्पदाः ।
प्रद्युम्नस्य पितुः कीदृक् पादपङ्करुहद्वयम् ॥ ६१ ॥

॥ नमदं गजं, नमदङ्गजम् ॥ ६ ॥

कीदृशः कः पशुपतेर्दग्धः फालाक्षिवह्निना ।
बकाभिधानतां बिभ्रद् यातुधानश्च कीदृशः ॥ ६२ ॥

॥ महाघः स्मरः, महाघस्मरः ॥ ७ ॥

नरसर्पौ मिथो दृष्ट्वा कीदृशं कमवाप्नुतः ।
सुरासुरकुलं कीदृङ् मथितुं प्राप सागरम् ॥ ६३ ॥

॥ समं दरं, समन्दरम् ॥ ८ ॥

नरसर्पाविति । अत्र कीदृशमिति भेदकविषयः प्रश्नः । कमिति भेद्यविषयः । कीदृक् सुरासुरकुलं मथितुं सागरं प्रापेत्यर्थान्तरविषयः प्रश्नः । तेषां समन्दरमित्युत्तराणि । तत्र समं तुल्यं दरं भयमिति भेदकभेद्ययोरुत्तरे । समन्दरं मन्दरसहितमित्यर्थान्तरस्य ॥

कीदृशं कं भजेद्धीरो हत्वा विमतभूभुजः ।
पाण्डोरपत्यजातं च कीदृशं भासते स्म तत् ॥ ६४ ॥

॥ सधनं जयम, सधनञ्जयम ॥ ९ ॥

कीदृशमिति । कीदृशं कमिति भेदकभेद्यप्रश्नौ । पाण्डोरित्यर्थान्तरप्रश्नः । तेषां सधनञ्जयमित्युत्तराणि । तत्र सधनं जयमिति व्यस्तत्वेन भेदक-

---

१. 'भजेद्वीरो' ख. ग. च.

भेद्ययोः, समस्ततेन सधनञ्जयमित्यर्थान्तरस्य ॥

कीदृशं किं समादत्ते तक्षा रथविनिर्मितौ ।
अभिवाद्यं [1]निरीक्ष्यापि कीदृक् स्यादसतां कुलम् ॥ ६५ ॥

॥ नवं दारु, नवन्दारु ॥ १० ॥

कीदृशमिति । अत्र प्रश्नत्रयस्य नवन्दारु इत्युत्तराणि तत्र नवं दारु इति भेदकभेद्ययोरुत्तरे । नवन्दारु इति समस्तत्वेनार्थान्तरस्य । वन्दारु वन्दनशीलं, तन्न भवतीति नवन्दारु ॥

अकरोदेकचक्रायां [2]कीदृशीं कां वृकोदरः ।
दक्षाध्वरे हरश्चक्रे भगमूर्तिं च कीदृशीम् ॥ ६६ ॥

॥ युक्तां बककक्षतिम्, युक्ताम्बककक्षतिम् ॥ ११ ॥

अकरोदिति । अत्र कीदृशीं कामिति भेदकभेद्ये । दक्षाध्वरेत्यद्यर्थान्तरम् । तेषां युक्ताम्बकक्षातिमिति व्यस्ते उत्तरे । युक्ता अम्बकक्षतिर्यस्याः सा तथोक्ता तामित्यखण्डम् ॥

कीदृशं कं पुरा [3]कुन्त्याः कन्याया भानुरग्रहीत् ।
अवृणीत स्वयं कन्या कं भूधरशिखामणेः ॥ ६७ ॥

॥ [4]घननिजप्रभावशं करम्, घननिजप्रभावशङ्करम् ॥ १२ ॥

---

१. 'विलोक्यापि' क. ख. ग. च. २. 'कीदृशं' ख.
३. 'कान्त्यां' ख. च. ४. 'सन्निजप्रभावः शंकरं' ख. च.

कीदृशमिति । अत्र भेदकभेद्ययोः घननिजप्रभावशं करमिति व्यस्तोत्तरे । अत्र घननिजप्रभाभिः अवशमिति भेदकम् । करमिति भेद्यम् । अर्थान्तरस्य तु घनो निजप्रभावो यस्य स तथोक्तः । तादृशं शङ्करमिति समस्तमुत्तरम् ॥

पचन्ति सूदाः कल्याणे कीदृशीं कां [1]सपायसाम् ।
उप्तबीजचया भूमिरचिरात् कां प्रदर्शयेत् ॥ ६८ ॥

॥ कोमळां कूरसंहतिम्, कोमळाङ्कूरसंहतिम् ॥ १३ ॥

पचन्तीति । अत्र कोमळां कूरसंहतिमन्नराशिमिति भेदकभेद्ययोर्व्यस्त उत्तरे । अर्थान्तरे कोमळाङ्कूरसंहतिमिति समस्तोत्तरम् ॥

[2]चमूपतिर्गन्तुमिच्छन्नारोहेत् कीदृशं च कम् ।
विदारयेच्च कं मूर्ध्नि केसरी नखरैः खरैः ॥ ६९ ॥

॥ मत्तं गजं, मतङ्गजम् ॥ १४ ॥

कीदृशं कं समालोक्य मुञ्चन्त्यध्वानमध्वगाः ।
वदन्ति वचनं कीदृग्राजा[3]स्थाने कवीश्वराः ॥ ७० ॥

॥ सभारं जनम्, सभारञ्जनम् ॥ १५ ॥

महानदी कीदृशं किं वहते सततं भुवि ।
[4]दुष्टो जनः कीदृशः स्याच्चिकीर्षुः परवञ्चनम् ॥ ७१ ॥

---

१. 'कुतूहलात्' ख. ग. च. २. 'सेनापति' क.
३. 'अस्थाने' ख. ग. च. ४. 'तुष्टो' ख.

॥ सद् अम्भः, सदम्भः ॥ १६ ॥

कीदृशीं[1] कामजनयन्नन्दगोपालसुन्दरी[2] ।
पाण्डुभूपालजननीं कां वदन्ति पुराविदः ॥ ७२ ॥

॥ [3]शिवां बालिकाम्, शिवाम्बालिकाम् ॥ १७ ॥

कीदृशीमिति । अत्र भेदकभेद्ययोः शिवां बालिकामिति व्यस्तोत्तरे । अर्थान्तरे शिवाम्बालिकामिति समस्तोत्तरम् । शिवा शुभा चासावम्बालिका चेति ॥

उपयेमे कीदृशीं कां निषधानामधीश्वरः ।
आश्रयन्ते मधुलिहः कीदृशीं सरसीं पुनः ॥ ७३ ॥

॥ कान्तां भोजजाताम्, कान्ताम्भोजजाताम् ॥ १८ ॥

उपयेम इति । अत्र भेदकभेद्ययोः कान्तां भोजजातामिति व्यस्तोत्तरे । अर्थान्तरे कान्ताम्भोजजातामिति समस्तमुत्तरम् । कान्तमम्भोजजातं यस्यास्सा तथोक्ता, ताम् ॥

उद्धर्तुमुदधेः क्षोणीं कीदृशीं कां दधौ हरिः ।
नानातरुसमाकीर्णं काननं च बिभर्ति काम् ॥ ७४ ॥

॥ भासुरां कोलताम्, भासुराङ्कोलताम् ॥ १९ ॥

उद्धर्तुमिति । अत्र भेदकभेद्ययोः भासुरां कोलतामिति व्यस्तोत्तरे ।

---

१. 'कीदृशं' ख. ङ. च.    २. 'पश्य सु' ख. च.
३. 'अम्बालीम् ॥' च.

अर्थान्तरे भासुराङ्कोलतामिति समस्तोत्तरम् । भासुरा अङ्कोला यस्य तत् तथोक्तम्, तस्य भावस्तत्ता, ताम् ।

सम्पादितसमित्पुष्पः कीदृशीं कां वहेन्मुनिः ।
निषादी कां श्रयेदिच्छन्मदवारणवारणम् ॥ ७५ ॥

॥ दृढां[1] कुशासक्तिम, दृढाङ्कुशासक्तिम् ॥ २० ॥

सम्पादितेति । अत्र भेदकभेद्ययोर्दृढां कुशासक्तिमिति व्यस्तोत्तरे । अर्थान्तरे दृढाङ्कुशासक्तिमिति समस्तमुत्तरम् ॥

कीदृशीं कां क्षितितले बिभर्ति प्राणिनां मनः ।
स्तनोत्तरीयं शुद्धान्तसुन्दरीणां दधाति काम् ॥ ७६ ॥

॥ चित्रां चलताम, चित्राञ्चलताम ॥ २१ ॥

कीदृशीमिति । अत्र भेदकभेद्ययोश्चित्रां चलतामिति व्यस्तोत्तरे । अर्थान्तरे चित्राञ्चलतामिति समस्तमुत्तरम ॥

कीदृशीं कां क्षितिभुजां सेना वहति सन्ततम् ।
युवानौ स्वस्थहृदयौ[2] दधाते कामहर्निशम् ॥ ७७ ॥

॥ उदारां गजताम, उदाराङ्गजताम ॥ २२ ॥

कीदृशीमिति । अत्र भेदकभेद्ययोरुदारां गजतामिति व्यस्तोत्तरे । अर्थान्तरे उदाराङ्गजतामिति समस्तमुत्तरम् ॥

---

१. 'शुभां' ख. च. २. 'रूपसम्पन्नौ' ङ.

कीदृशीं कां प्रदिशति [1]प्रार्थित[2]स्वर्गतिर्जनः ।
वाञ्छापदं वितन्वन्ति युवानः कीदृशीं वधूम् ॥ ७८ ॥

॥ [3]शुभां गाम्, शुभाङ्गाम् ॥ २३ ॥

कीदृशीमिति । अत्र भेदकभेद्ययोः शुभां गामिति व्यस्तोत्तरे । अर्थान्तरे शुभाङ्गामिति समस्तमुत्तरम् ॥

कीदृशं [4]कं वितन्वन्ति [5]तपसा विजितेन्द्रियाः ।
सुग्रीवसेना[6]पतयः कं चक्रू रामशासनात् ॥ ७९ ॥

॥ बहुलं को[7]परोधम्, बहुलङ्को[8]परोधम् ॥ २४ ॥

कीदृशमिति । अत्र भेदकभेद्ययोर्बहुलं कोपरोधमिति व्यस्तोत्तरे । अर्थान्तरे बहुलङ्कोपरोधमिति समस्तमुत्तरम् ॥

कीदृशी का भवेद् वीरक्षतारि[9]क्षतजस्रुतौ ।
चुम्बनासक्तमनसं तनुते का विलासिनम् ॥ ८० ॥

॥ पाटला धरा, पाटलाधरा ॥ २५ ॥

कीदृशीति । अत्र भेदकभेद्ययोः प्रश्नयोः पाटला धरेति व्यस्तोत्तरे अर्थान्तरे पाटलाधरेति समस्तमुत्तरम् ॥

---

१. 'सद्गतिप्रेप्सया नरः' ङ. २. 'स्वर्गतोऽर्जुनः' ख. घ.
३. 'रुचिरां गाम्, रुचिराङ्गां' क. ग. ङ. ४. 'किं' ङ. च.
५. 'ताप' ख. ग. ङ. च. ६. 'पतिभिः किं' ङ.
७,८. 'पमर्दनम्' ङ. ९. 'क्षतजोक्षिता' ङ.

कीदृशी का भवेद् राज्ञां चरतां नीतिवर्त्मनि ।
गृह्णन्ति हेतीर्योद्धारः कीदृशीः समरोन्मुखाः ॥ ८१ ॥

॥ अकुण्ठा श्रीः, अकुण्ठाश्रीः ॥ २६ ॥

कीदृशीति । अत्र भेदकभेद्ययोरकुण्ठा श्रीरिति व्यस्तोत्तरे । अर्थान्तरे अकुण्ठाश्रीरिति समस्तमुत्तरम् । अकुण्ठा अश्रयो यासां ताः अकुण्ठाश्रयः ताः । 'स्त्रियः पाल्यश्रिकोटयः' इत्यमरः ॥

कीदृशं कं कामयते तरुणीनां कदम्बकम् ।
[1]वसन्तवासरं च स्यात् कीदृशं जगतीतले ॥ ८२ ॥

॥ [2]मञ्जुळप्रभं जनम्, मञ्जुळप्रभञ्जनम्* ॥ २७ ॥

कीदृशमिति । अत्र भेदकभेद्ययोर्मञ्जुळप्रभं जनमिति व्यस्तोत्तरे । अर्थान्तरे मञ्जुळप्रभञ्जनमिति समस्तमुत्तरम् ॥

कीदृशी का भाग्यवतो [3]गृहे वसति सन्ततम् ।
कीदृशः केशपाशश्च [4]तरुणीसंहतेः पुनः ॥ ८३ ॥

॥ शुभदा मा, शुभदामा ॥ २८ ॥

---

* इतः परं ख ग च पाठेषु 'बिभर्ति०' (श्लो० ८४) ततः 'कीदृशी०' (श्लो० ८३) इति क्रमो दृश्यते.

---

१. 'गजयूथसमीपस्थः किं प्राप्नोति महीरुहः ॥' ङ, 'वसन्तावसरं च' ख. च.  २. ॥ 'सुप्रभं जनं, सुप्रभञ्जनम् ॥' ग, 'बहुशोभं जनं, बहुशोभञ्जनम् ॥ ङ.  ३. 'गेहे' क. ग. च.
४. 'कामचापाञ्चितभ्रुवाम्' ङ.

कीदृशीति । अत्र भेदकभेद्ययोः शुभदा मा श्रीरित्यर्थः व्यस्तोत्तरे । अर्थान्तरे शुभदामा शुभमालिकेति समस्तमुत्तरम् ॥

बिभर्ति वर्षासमये कीदृशं कं नभस्तलम् ।
[1]आरम्भे ज्वररोगस्य किं कर्तव्यं शरीरिणाम् ॥ ८४ ॥

## ॥ बहुलं घनम्, बहुलङ्घनम् ॥ २९ ॥

बिभर्तीति । अत्र भेदकभेद्ययोः बहुलं घनमिति व्यस्तोत्तरे । अर्थान्तरे बहुलङ्घनमिति समस्तमुत्तरम् ॥

कीदृशी भजते [2]चारु का शाणोल्लिखितं मणिम् ।
विततिः कीदृशी नानावस्तुविक्रायिणां [3]विशाम् ॥ ८५ ॥

## ॥ पृथुला आभा, पृथुलाभा ॥ ३० ॥

कीदृशीति । भेदकभेद्ययोः पृथुला आभेति व्यस्तोत्तरे । अर्थान्तरे पृथुलाभेति समस्तमुत्तरम् ॥

अथ नामाख्यातम्—

सुप्तिङन्ततया द्वेधा भिन्नमेकं यदुत्तरम् ।
यत्र [4]श्लिष्टं भवति तन्नामाख्यातं [5]विदुर्बुधाः ॥ ८६ ॥

अथ नामाख्यातम् । तल्लक्षणमाह— सुप्तिङन्ततयेति । श्लिष्टमेकं यत्

---

१. ‘ ज्वररोगेण युक्तस्य शरीरं कीदृशं भवेत् ’ ङ.
२. ‘ भव्यं ’ ङ. ३. ‘ विशाम् ॥ अट्टशूलानामित्यर्थः । पृथु ’ ग.
४. ‘ क्लिष्टं ’ च. ५. ‘ बुधा विदुः ॥ ’ ग.

पदं सुप्तिङन्ततया द्वेधा भिन्नं सत् प्रश्नयोरुत्तरं भवेच्चेत् तन्नामाख्यातमुच्यते ॥

तद् यथा—

[1]प्रणतान् किं वितन्वाते पार्वतीपरमेश्वरौ ।
कः पुनर्नहुषस्याभूदारूढस्य त्रिविष्टपम् ॥ ८७ ॥

॥ पातः ॥ १ ॥

उदाहरति- यथेति । *क इति । अत्र प्रश्नद्वये एकस्य पातः पतनमिति सुबन्तमुत्तरम् । अन्यत्र पातः पालयत इति तिङन्तमुत्तरम् ॥

शिशिरापगमे कीदृङ्मन्दिरं धनिनामपि ।
किमाचरन्ति सम्प्रेक्ष्य [2]डाम्भिकं पुरुषं [3]बुधाः ॥ ८८ ॥

॥ अपहसन्ति ॥ २ ॥

शिशिरेति । अत्राद्यप्रश्नस्य अपहसन्तीति सुबन्तमुत्तरम् । हसन्तीरहितमपहसन्ति । द्वितीयस्य अपहसन्ति अपहासं कुर्वन्तीति तिङन्तमुत्तरम् ॥

आस्ते धराधरे कस्मिन्नद्रिराजसुतापतिः ।
[4]अस्य वाक्यस्य कः शेषो रात्राविन्दुरसाविति ॥ ८९ ॥

---

* 'कः पुनर्नहुषस्याभूदा॰' इति स्याद् व्याख्यानुसारी श्लोकारम्भः ।

---

१. 'नमतां किं' च. २. 'निर्गुणं' ङ. ३. 'नराः' ग.
४. 'कथं पयोधरापाये भवति क्षणदापतिः' ॥ ङ.

॥ राजते ॥ ३ ॥

भवन्ति वर्षासमये कीदृशा गिरिनिर्झराः ।
गुल्मान्वितं क्षुद्रवनं कीदृशं [1]जगतीतले ॥ ९० ॥

॥ नदन्ति ॥ ४ ॥

भवन्तीति । अत्राद्यप्रश्नस्य नदन्ति दन्तिरहितमिति सुबन्तमुत्तरम् । द्वितीयस्य नदन्ति स्वनन्तीति तिङन्तमुत्तरम्* ॥

आभीरजातौ सञ्जातः कस्मै कन्यां प्रयच्छति ।
रक्षार्थिनो [2]मानुषस्य किं वचः स्वामिनं प्रति ॥ ९१ ॥

॥ गोपाय ॥ ५ ॥

आभीरेति । अत्र गोपायेति श्लिष्टं पदमेकं पूर्वार्धोत्तरार्धस्थितयोः सुप्तिङन्तयोः पदयोर्द्वेधा भिन्नमुत्तरं भवति । गोपाय गोपालायेति सुबन्तम् । गोपाय रक्षेति तिङन्तम् ॥

अनुकूलो मरुत् कूलं सिन्धोर्नावं करोति किम् ।
भवनं शूद्रजातीनां कीदृशं [3]क्षितिमण्डले ॥ ९२ ॥

---

* इतः परं व्याख्यायां— 'वसुन्धरेति। अत्राद्यप्रश्नस्य सस्नुः ससानुरिति सुबन्तमुत्तरम् । द्वितीयप्रश्नस्य स्नानमकुर्वान्निति तिङन्तोत्तरम् ।' इति वर्तते । किन्तु मूलश्लोको मातृकासु न दृश्यते ।

---

१. 'धरणीतले' ख. ङ. च. २. 'मनुष्यस्य' ख. ग. च.
३. 'स्यान्महीतले' ङ.

॥ नयति ॥ ६ ॥

*भवनामिति । अत्राद्यप्रश्नस्य नयति यतिरहितमिति सुबन्तमुत्तरम् । द्वितीयप्रश्नस्य नयति प्रापयतीति तिङन्तमुत्तरम् ॥

‡किं चक्रुः पाण्डुतनयाः सर्वामुर्वीं हतारयः ।
किं प्रार्थ्यते प्रथमतो मानवैः पृथिवीतले ॥ ९३ ॥

॥ आयुः ॥ ७ ॥

$किं चक्रिरे यमपुरं राक्षसा रामविद्विषः ।
निर्वर्तने वाजिमेधक्रतोः किं साधनं पुनः ॥ ९४ ॥

॥ ययुः ॥ ८ ॥

धृतराष्ट्रस्य भार्यायाः का स्यात् पाण्डुकुटुम्बिनी ।
कृतपुण्यचयः स्वर्गं पुरुषः किं विधास्यति ॥ ९५ ॥

॥ याता ॥ ९ ॥

---

* 'भवनं शूद्रजातीनां' इति स्याद् व्याख्यानुसारी श्लोकारम्भः ।

‡ ख च पाठयोः श्लोकोऽयं 'किं चक्रिरे' (श्लो० ९४) इत्यस्यानन्तरं वर्तते ।

$ ङपाठे श्लोकोऽयं नास्ति ।

---

१ 'परम् ॥' ग.

धृतराष्ट्रस्येति । अत्राद्यप्रश्नस्य याता भर्तुर्भ्रातृभार्या यातेत्युच्यते । इदं सुबन्तमुत्तरम् । द्वितीयप्रश्नस्य तु याता 'या प्रापण' इति धातोर्लुटि रूपम् । तिङन्तमुत्तरम् ॥

*अस्य वाक्यस्य कः शेषो हरे त्वं वारिधाविति ।
वसुन्धराया वहने कस्मिन्नास्ते प्रगल्भता ॥ ९६ ॥

॥ शेषे ॥ १० ॥

†विश्वमिति । अत्राद्यप्रश्नस्य शेषे इति सुबन्तमुत्तरम् । द्वितीयप्रश्नस्य शेषे 'शीङ् स्वप्ने' इति धातोर्लटि मध्यमपुरुषैकवचनम् । स्वपिषीत्यर्थः । इदं तिङन्तमुत्तरम्$ ॥

वने रामं घनं मत्वा किं कृतं शिखिभिर्मुदा ।
कैलासशैलनिलयं मिथुनं तच्च कीदृशम् ॥ ९७ ॥

॥ अनादि ॥ ११ ॥

कैलासेति । अत्र प्रश्नयोरनादीति सुप्तिङन्तयोर्द्विधा भिन्नमेकं

---

* ख च पाठयोः श्लोकोऽयं नास्ति ।

† 'विश्वम्भराया वहने०' इति स्याद् व्याख्यानुसारी श्लोकारम्भः ।

$ अतः परं व्याख्यायां— 'भासन्त इति । अत्राद्यप्रश्नस्य भानि नक्षत्राणीति सुबन्तमुत्तरम् । द्वितीयप्रश्नस्य भानि इति 'भा दीप्तौ'विति धातोर्लोटि उत्तमपुरुषैकवचनम् । तिङन्तमुत्तरम् ॥' इति दृश्यते । परं तु नैकस्मिन्नपि ग्रन्थे मूलश्लोको दृश्यते ।

श्लिष्टमुत्तरम् । तत्र अनादि आदिरहितमिति सुबन्तमुत्तरम् । अन्यत्र अनादि शब्दितमिति तिङन्तमुत्तरम् ॥

इति सेनापतिविरचितायां चित्ररत्नाकरव्याख्यायां
शरच्चन्द्रिकायां पञ्चमः परिच्छेदः ॥

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा चाजनयत् सतीजननुता यं मानितं सज्जनैः ।
जातस्तस्य कृतौ हि पञ्चमपरिच्छेदोऽनुजत्वं[1] गते
पाञ्चालीपरिणीतिसंज्ञककृतेः श्रीचित्ररत्नाकरे[2] ॥

१. ' नुजे द्रौपदीकल्याणाख्यकृतेर्मनोहरतरश्रीचित्र ' इ॰पाठः

२. ' संश्रित्र ' क. ग.

अथातिचित्राणि—

प्रश्नश्लोकान् प्रथमतः कथयित्वा ततः क्रमात् ।
उत्तरं चोत्तरश्लोकैरतिचित्रैरिहोच्यते ॥ १ ॥

अथातिचित्राख्यः परिच्छेदो व्याक्रियते— प्रश्नलोकानिति । अत्र प्रथमतः प्रश्नश्लोकान् प्रश्नरूपान् श्लोकान् कथयित्वा तत उत्तरश्लोकैरतिचित्रैः क्रमात् प्रश्नक्रमेणोत्तरं चोच्यते । प्रश्नश्लोकस्थितस्य प्रथमप्रश्नस्य चित्रश्लोकस्थितं प्रथमं पदमुत्तरम् । द्वितीयप्रश्नस्य चित्रश्लोकस्थं द्वितीयं पदमुत्तरम् । एवं सर्वत्र द्रष्टव्यम् ॥

विलिख्य श्लोकरूपेण चित्रश्लोकाननन्तरम् ।
सौकर्यार्थं विलिख्यन्ते पदरूपेण ते पुनः ॥ २ ॥

विलिख्येति । प्रथमं चित्रश्लोकान् श्लोकरूपेण विलिख्य पश्चात् सौकर्यार्थं ते पदरूपेण विलिख्यन्ते । पदविभागस्य सुबोधार्थमित्यर्थः ॥

अथ सर्वतोभद्रस्य प्रश्नश्लोकः—

भासन्ते के वधूभिः सुहितसुरगणाः के रवस्यार्वतः का
सम्बुद्धिः प्रार्थ्यते का कथमिव धनुषो यष्टिरज्या सुराली ।
कीदृक् कीदृक् सुसैन्यं भवति वसति का कौशिके तारनादाः
केऽरण्ये के चरन्ति स्फुरति च कलिका का चिता चञ्चरीकैः ॥३॥

---

१. 'द्रप्रश्न' ख. च.

अथ सर्वतोभद्रश्लोकः[1]—

व रा ह् वा वा ह् रा व रा ज ता न न ता ज रा ।
ह् ता रि का का रि ता ह् वा न का रु रु का न वा[2] ॥ ४ ॥

अथा[3]स्य श्लोकस्य पदविभागः—

॥ वराः, ह्वाः, वाह्राव, राजता, ननता, अजरा, ह्तारि, काकारिता, आह्वानकाः, रुरुकाः, नवा ॥ इति ।

भासन्ते के वधूभि[5]रिति प्रश्नश्लोके ये प्रश्ना उक्तास्तेषु प्रथमप्रश्नस्य वरा इति सर्वतोभद्रश्लोके प्रथ[6]मपदमुत्तरम् । द्विती[7]यप्रश्नस्य द्विती[8]यम् । तृती[9]यस्य तृतीयम् । एवं सर्वत्र द्रष्टव्यम् ।

सर्वतोभद्रमिति किञ्चिच्चित्रम् । तत् प्रथमं वक्तुं तदादौ तत्प्रश्नश्लोकं कथयति– भासन्त इति । वधूभिः के भासन्त इति प्रथमः प्रश्नः । सुहितसुरगणाः सन्तर्पितदेवगणाः के इति द्वितीयः प्रश्नः । अर्वतः अश्वस्य रवस्य शब्दस्य का सम्बुद्धिरिति तृतीयः । का प्रार्थ्यत इति चतुर्थः । अज्या अमौर्वीका धनुषो यष्टिः कथमिव भवतीत्यसौ पञ्चमः । सुराली देवपङ्क्तिः कीदृगिति षष्ठः । सुसैन्यं कीदृग् भवतीति सप्तमः । कौशिके घूके का वसतीत्यष्टमः । के तारनादा अत्युच्चशब्दा इति नवमः । अरण्ये के

---

१. ‘ कस्योत्तरश्लोकः ’ ख. च. २. ‘ वा ॥ वराः ’ ख.
३. ‘ अस्य श्लो ’ ग. ४. ‘ स्य पदविभागः क्रियते ’ ङ.
५. ‘ रिति ये ये ’ ख, ‘ रिति ये ’ ङ, ‘ रित्यादि ये ये ’ च.
६. ‘ मं पद ’ ग. ७. ‘ यस्य द्वितीयमित्यादि द्रष्टव्यम् ’ ख.
८. ‘ यं पदम् । एवं ’ ग, ‘ यपदम् । तृती ’ ङ.
९. ‘ यप्रश्नस्य तृती ’ च.

सञ्चरन्तीति दशमः । चञ्चरीकैर्भृङ्गैरञ्चिता का कलिका स्फुरतीत्येकादशः ।

अथ सर्वतोभद्रश्लोकः– 'वरा हवा वाहराव राजता ननता जरा । हतारि काकारिताहवानका रुरुका नवा ॥' पदविभागश्चास्य श्लोकस्य– 'वराः हवाः, वाहराव, राजता, ननता, अजरा, हतारि, काकारिता, आहवानकाः, रुरुकाः, नवा' । एतानि एकादश पदानि प्रश्नश्लोकस्थितानामेकादशप्रश्नानां यथासंख्यमुत्तराणि भवन्ति । अथ सर्वतोभद्रस्योद्धारः–

'चतुरश्रस्यान्तराले पङ्क्तीरष्टौ प्रकल्पयेत् ।
अष्टाष्टकोष्ठसहितास्तेषु कोष्ठेष्वनुष्टुभः ॥
चतुरो विलिखेत् पादान् द्वात्रिंश(त्स्वा ? त्या)दितः क्रमात् ।
आरभ्य पञ्चमीं पङ्क्तिं पादांस्तान् व्युत्क्रमाल्लिखेत् ॥
अवशिष्टेषु कोष्ठेषु सर्वतोभद्रनाम तत् ॥

अथ कविकाव्यनामचक्रबन्धस्य[1] प्रश्नश्लोकः—

पीतं किं संहितः[2] कया भृगुपतिः कीदृक् सुराणां जगत्
कीदृक् तच्च जयद्रथस्य समरं कास्ते[3] च लक्ष्मीवपुः ।
कीदृक् पद्मदृशः कुचाहतिपदं किं योषितः[4] काध्वगा-
क्रान्ता का सुरवा च कीदृगपरा सन्ध्या चमूः कीदृशी ॥ ५ ॥

अथ[5] चक्रबन्धश्लोकः[6]—

---

१. 'न्धश्लोकस्य प्रश्न' ख ङ. च.
२. 'भुवने भृशं भृगु' ङ.
३. 'कीदृक् क लक्ष्मी' ङ.
४. 'तां का' ख. च.
५. 'अथ उत्तरम्–' ख.
६. 'कस्योत्तरश्लोकः–' च.

कल्याणाचलरोचिरन्तकसपत्नाप्तास्त्रविद्याश्रिया
दृप्यच्चक्रममित्रबाधकपृषत्कव्यूहकृत्तार्जुनि । [1] [2]
पद्माक्षे कचभारशोभि कमनोरः पद्धतिः कोकिला
लाक्षाश्रीकघना दृढद्विपमुखायातध्वनिद्योतला ॥ ६ ॥

पदविभागस्तु— [3]

॥ कल्याणाचलरोचिः, अन्तकसपत्नाप्तास्त्रविद्याश्रिया, दृप्यच्चक्रम्, अमित्रबाधकपृषत्कव्यूहकृत्तार्जुनि, पद्माक्षे, कचभारशोभि, कमनोरः, पद्धतिः, कोकिला, लाक्षाश्रीकघना, दृढद्विपमुखायातध्वनिद्योतला ॥ [4] [5] [6]

चक्राकारेण लिखितेऽस्मिन् श्लोके चतुर्थवलये 'चक्रकविकृति'-रिति, सप्तमवलये 'चित्ररत्नाकरः' इति च कविकाव्यनामनी वर्तेते ॥ [7] [8]

अथ कविकाव्यनामचक्रबन्धश्लोकस्य प्रश्नश्लोकः— पीतमिति । अत्र श्लोके एकादश प्रश्नाः । तेषां चित्रश्लोकस्थितानि एकादश पदान्युत्तराणि भवन्ति । कानि पुनस्तानीत्याकाङ्क्षायामाह— कल्याणाचलरोचिः हेमाद्रिमहः । इदं पीतं किमिति प्रश्नस्योत्तरम् । एवमेव सर्वत्रोन्नेयम् । अथ चक्रबन्धोद्धारः—

---

१. 'दीव्यच्च' ख. २. 'नौ' ग.
३. 'पद्म्' ख. ४. 'दीव्यच्च' ख. ५. 'नौ' ग.
६. 'ला ॥ अत्र प्रश्नश्लोके एकादश प्रश्ना उक्ताः । तेषामुत्तराणि चक्रबन्धश्लोके एकादश पदानि वर्तन्ते । यथासंख्यं योजनीयम् । षडरवचक्रा' ग.
७. 'मे वलये' ख. ८. 'ति कवि' ङ.

'वक्ष्यते षडरं चक्रं प्रत्यरं नवाक्षरम् ।
त्रयाणामपि पादानां दशमं कर्णिकाक्षरम् ॥
आदितः स्वस्वधुर्यारैस्त्रयः पादाश्चतुर्थगाः ।
वर्णाः षष्ठान्त्यमारभ्य संवदन्तेऽन्तिमाक्षरैः ॥
मध्ये द्वौ द्वौ विसंवादौ षट्स्वरेषु क्रमाद्भवेत् ।
चतुर्थैः सप्तमैर्वर्णैर्वर्णनं कविकाव्ययोः ॥

अथ मुरजबन्धस्य प्रश्न[1]श्लोकः—

[2]राज्ञः का जयकारिणी घनघटा कीदृक् सतां कः प्रियः
कीदृक् तोयविवर्जिता च सरसी सूक्तिः कवेः कीदृशी ।
कीदृग् धैर्यवतां ततिः सुमनसां वृन्दैर्न का स्पृश्यते
फुल्ला केन युता प्रसूनकलिका क्षोणीरुहोदञ्चिता ॥ ७ ॥

अथ मुरजबन्ध[3]श्लोकः—

से ना सा र ज सा र श्री घ ना सा धु र सा र सा ।
सा र सा र र सा यु क्त भी र सा र ज सा यु ता ॥ ८ ॥

प[4]दविभाग[5]स्तु—

॥ सेना, आसारजसारश्रीघना, साधुः, असारसा, सारसाररसा, अयुक्तभीः, रसा, रजसा युता[6] ॥

---

१. 'श्नः' ख.   २. 'नेतुः का' क.
३. '॰न्धश्लोकः' क, '॰न्धस्योत्तरश्लोकः' च.
४. 'पदम्' ख.   ५. 'गः' ख.
६. 'ता। एतानि पदानि प्रश्नश्लोकस्थितप्रश्नेन साकं पूर्ववद् यथाक्रमं योजनीयानि' ॥ ख.

अथ मुरजबन्धः— आदौ तस्य प्रश्नलोकः। तत्र(नव?अष्टौ)प्रश्ना वर्तन्ते राज्ञः का जयकारिणीत्यादयः। तेषां चित्रश्लोकस्थितानि नव पदान्युत्तराणि प्रश्नक्रमेण भवन्ति। तत्र का राज्ञो जयकारिणीति प्रश्नस्य सेनेत्युत्तरम्। सर्वत्र प्रश्नक्रमेणोत्तरक्रम इत्यनुसन्धेयम्। अथ मुरजबन्धोद्धारः—

चतुष्पङ्क्तिगतान् श्लोकपादान् कृत्वाद्यपादतः।
तत्रावरोहयेद् वर्णानेकद्वित्रिचतुःक्रमात्॥
अन्त्याच्च पञ्चषट्सप्ताष्टक्रमादधिरोहयेत्।
ततस्त्वारोहयेदन्त्यादेकद्वित्रिचतुःक्रमात्॥
आद्याच्च पञ्चषट्सप्ताष्टक्रमादवरोहयेत्।
आद्यान्तपादसंवादः स्यादित्थं पठने कृते॥
आद्यमाद्ये द्वितीयं च तृतीयं च द्वितीयके।
आद्ये चतुर्थं पञ्चमं च द्वितीये षष्ठसप्तमौ॥
आद्येऽष्टममथाद्यं तु द्वितीये प्रथमे पुनः।
द्वितीयं च तृतीयं च द्वितीये तु चतुर्थकम्॥
पञ्चमं चाद्यके षष्ठसप्तमावष्टमं पुनः।
द्वितीये तत्तु पूर्वार्धसंवादि स्यान्न संशयः॥
तृतीयतुर्ययोरेवं पादयोर्विधिमुन्नयेत्।
तत्तूत्तरार्धसंवादि भवेदत्र न संशयः॥
उक्तो मुरजबन्धोऽयं कविभिश्चित्रवेदिभिः॥

अथ गोमूत्रिकाबन्धस्य प्रश्नश्लोकः—

कः कन्दर्पनिषूदनो दनुसुतध्वंसं विधत्ते च कः
कीदृक् पर्वतसार्वभौमदुहिता लोकेन का पूज्यते।
के कान्ताकुचकुम्भयोर्विदधते शोभामनल्पां पुनः
सङ्ग्रामं कलयन्ति के विरचितासक्तिश्च का मन्मथे॥ ९॥

अथ गोमूत्रिकाबन्धश्लोकः[1]—

ध रा ध र सु ता ने ता क्षी रा ब्धि त न या प तिः ।
सु रा सु र न ता मा ता द्वा रा ग त भ या र तिः ॥ १० ॥

स्पष्टः पदविभागः[2] ॥[3]

अथ गोमूत्रिकाबन्धः । आदौ तस्य प्रश्नश्लोकः— कः कन्दर्पनिषूदन इति । अत्र प्रश्नाः सप्त । चित्रश्लोके उत्तररूपाणि पदानि च सप्त । तान्याह— धराधरसुतानेतेति । अत्र प्रश्नश्लोके प्रश्नाः स्पष्टाः । चित्रश्लोके उत्तररूपाणि पदानि च स्पष्टतराणि । अत्रापि प्रश्नक्रमेणोत्तरक्रमः । अथ गोमूत्रिकाबन्धोद्धारः—

उपरि प्रथमार्धं तु द्वितीयार्धमधो लिखेत् ।
पूर्वार्धे विषमा वर्णा उत्तरार्धे समास्तथा ॥
गोमूत्रिकारवद्ग्राह्या वर्णा एवं पुनः पुनः ।
तत् स्यात् पूर्वार्धसदृशमुत्तरार्धमथोच्यते ॥
उत्तरार्धे च विषमाः पूर्वार्धे च समास्तथा ।
ग्राह्या गोमूत्रवत् तच्चेदुत्तरार्धसमं भवेत् ॥
स स्याद् गोमूत्रिकाबन्धः कविभिः समुदीरितः ।

अथ अर्धभ्रमकस्य[4] प्र[5]श्नश्लोकः[6]—

---

१. 'अथ बन्धश्लोकः' ख. २. 'बन्धः' ग घ ङ., 'बन्धस्योत्तरश्लोकः' च. ३. 'अत्र स्प' घ.
४. 'गः । सर्वं पूर्ववत् ॥' घ. ५. 'कप्रश्न' घ.
६. 'प्रश्नः' ख.

वन्या कीदृगनीकिनी च महती कीदृग्भटो विद्विष-
श्छिन्द्यात् केन च यौवनेन कलिता पद्मेक्षणा कीदृशी ।
श्रीः कीदृक्छरदश्च योधघटया शोकः कया प्राप्यते
कास्ते पुंसि जयोत्सुके भवति तद्ब्रह्माद्वयं कीदृशम् ॥ ११ ॥

अथार्धभ्रमकश्लोकः[1]—

मे घ रा जि नि भा ना ग घ टा जि त ज ना सि ना ।
रा जि ता या ता स ना[2] भा जि त या सा जि ता ज नि ॥१२॥

पदविभागस्तु[3]—

मेघराजिनिभा, नागघटाजितजना, असिना, राजिता, आयातासनाभा, जितया, साजिता, अजनि[6] ॥

अथार्धभ्रमकसंज्ञं चित्रम्- प्रथमं तस्य प्रश्नश्लोकः वन्येति । अत्राष्टौ प्रश्ना वर्तन्ते । तेषां चित्रश्लोके मेघराजिनिभेत्यादीनि अष्टौ पदानि यथासंख्यमुत्तराणि भवन्ति । तानि च- मेघराजिनिभा, नागघटाजितजना, असिना, राजिता, आयातासनाभा- (आ ! अ)सनानामाभा (आ ! अ)सनाभा, आयाता असनाभा यस्याः सा तथोक्ता- जितया, साजिता सयुद्धता, अजनि जन्मरहितम् । अथ अर्धभ्रमकस्योद्धारः-

श्लोकपादास्तु चतुरश्चतुष्पङ्क्तिषु संलिखेत् ।
पादाद्याक्षरैर्योज्या द्वितीयाः सप्तमैः सह ॥

१. 'कस्योत्तरश्लोकः' ख. २. 'नभा' ख. च.
३. 'पदभक्तिः' ख ४. 'गः' ङ.
५. 'नभा' ख. च. ६. 'नि । सर्वं पूर्ववत् ॥' घ.

वर्णास्तृतीयाः षष्ठैश्च चतुर्थाः पञ्चमैः सह ।
प्रथमास्त्वानुलोम्येन चरमाः प्रतिलोमतः ॥
एवं योगे पूर्वत्रचेद्‍र्धभ्रमकनाम तत् ।

*अथाष्टदळपद्मबन्धः । तस्य सार्धः प्रश्नश्लोकः—

आस्ते को भुवि कीदृशो दिनकरो द्यौः[1] स्यात् कया किन्नरी
कीदृग् भोगिवधूः कया लसति खे किं भाति कस्मिन् केलिः[2] ।
वृत्त्या[3] कल्पतरुः कया स्फुरति पूः कीदृक् च का नासिका-
सम्बुद्धिश्च कयानृतावगमनं दीनस्य धीः कीदृशी ॥
पद्मः कीदृगनुद्धृतो युवतिदृक् कीदृक् सदा किं पिबेद्
गोमान् ग्रीष्मऋतावुपेयुषि सरःश्रेणी[4] पुनः कीदृशी ॥ १३ ॥

अस्योत्तरश्लोकः[5]—

ना कोकस्तोमरक्षी कृतबहुळतरक्षेम[6]भक्त्या सगाना
नागासक्त्या भमक्षे निखिलजननुतत्यागवत्या ससेना ।
नासे सत्यावगत्या वितरणसफलश्रीघनक्ष्मापलीना
नाळी पक्ष्मानघश्रीरधिकरसयुतक्षीरमस्तोककोना ॥ १४ ॥

पदविभागस्तु—

ना, कोकस्तोमरक्षी, कृतबहुळतरक्षेम[7]भक्त्या, सगाना, नागा-

---

* खपाठे अर्धभ्रमकानन्तरं रथबन्धः, गूढचतुर्थः, अर्धपादा (रोहा)वरोहः ; ङपाठे गूढचतुर्थः, अर्धपादारोहावरोहः इति दृश्यते।

---

१. ' द्यस्था कया ' च. २. ' कविः ' च.
३. ' सत्त्वाकल्प ' च. ४. ' सुरश्रेणी ' व.
५. ' अथ पद्मबन्धश्लोकः ' ग. व. ६,७. ' बहुळतमक्षे ' ग. व.

**सक्त्या, भम्, अक्षे, निखिलजननुतत्यागवत्या, ससेना, नासे, सत्यावगत्या, वितरणसफलश्रीघनक्ष्मापलीना, नाळी, पक्ष्मानघश्रीः, अधिकरसयुतक्षीरम्, अस्तोककोना ॥**

अथाष्टदळपद्मबन्धः- सार्धश्लोकेन तत्प्रश्ना उच्यन्ते। आस्ते इत्यादि। अस्मिन् सार्धप्रश्नश्लोके षोडश प्रश्ना वर्तन्ते। तेषां चित्रश्लोके ना कोकस्तोमरक्षीत्यादिषोडशपदानि उत्तराणि भवन्ति। अस्य श्लोकस्य पदविभागः क्रियते- ना, कोकस्तोमरक्षी, कृतबहुळतरक्षेमभक्त्या, सगाना, नागासक्त्या, भम्, अक्षे, निखिलजननुतत्यागवत्या, ससेना, नासे, सत्यावगत्या, वितरणसफलश्रीघनक्ष्मापलीना, नाळी, पक्ष्मानघश्रीः, अधिकरसयुतक्षीरम्, अस्तोककोना। एतानि षोडश पदानि आस्ते को भुवीति सार्धप्रश्नश्लोकस्थितानां षोडशप्रश्नानां यथाक्रममुत्तरत्वेन बोद्धव्यानि। अथ पद्मबन्धोद्धारः—

वक्ष्यतेऽष्टदळं पद्मं सप्तवर्णान् दळेषु च।
सकर्णिकान् लिखेद् दिक्षु विदिक्षु तु विकर्णिकान् ॥
प्रवेशनिर्गमाभ्यां तु दिशि ते स्युश्चतुर्दश।
व्यवधानेन तानाद्ये दळेऽन्यत्र त्वनन्तरान् ॥

**अथ शृङ्खलाबन्धस्य प्रश्नश्लोकः[2]—**

**सम्पादयन्ति वणिजः किमुदन्वतः का**
**जाता घनात् क्षरति का क च दण्डनीतिः।**
**सम्बुद्धिवाक् च विजिते तु कथं सुकीर्तिः**
**कीदृक् च का नरपतौ वसतिं विधत्ते ॥ १५ ॥**

---

* चपाठे एतदनन्तरं रथबन्धः परं दृश्यते,

---

१. ' ना ॥ अत्रापि पूर्ववत् ॥ अथ शृङ्खला ' घ.
२. बन्धः। तस्य प्रश्न ' घ.

अत्र वसुधाराजितता इत्युत्तरम् । इह वर्णद्वयात्मकपदादुपरितनमेकमेकमादायादाय पूर्वपूर्वमेकमेकं वर्णं हित्वा हित्वा उत्तराणि भवन्ति । अन्त्यप्रश्नस्याखण्डत्वेनोत्तरं भवति । यथा— वसु, सुधा, धारा, राजि, जित, तता, वसुधाराजितता ॥

अथ शृङ्खलाबन्धस्य प्रश्नश्लोकः— सम्पादयन्तीति । वसुधाराजितेत्युत्तरम् । इह वर्णद्वयात्मकपदादुत्तरमुत्तरमेकमेकं वर्णमादाय पूर्वपूर्वमेकमेकं हित्वा हित्वोत्तराणि भवन्ति । अन्त्यप्रश्नस्याखण्डत्वेनोत्तरम् । यथा— वसु, सुधा, धारा, राजि, जित, तता, वसुधाराजितता ॥

अथ रथबन्धः—

[2]हेळिमहाधृतभूतिः कोऽमलबोधप्रदो दयाजलधिः ।
रतिप[3]तिदमनो विशदस्मित[4]भूर्धीराश्चितोल्लसद्ध्यानः[5] ॥ १६ ॥

---

१. 'कं वर्णमादा' ग, 'कवर्णमादा' घ.

२. 'शैत्यलसद्द्विजराजद्युतिशालिजटाच्छटास्फुरन्मौलिः ।
सुरनुतमहिमा जेता स्मरस्य को मोदभूश्च कायिनतः‡ ॥ ख.

३. 'पतिमदघ्नविशद' च.    ४. 'तवान् धीराहितोल्ल' घ.

५. 'नः ॥ उत्तरं— हेमभूधरशरासन इति ॥' च.

---

‡ 'नतः ॥ अयमन्तर्लापिश्लोकः । इदमार्यावृत्तम् । प्रश्नोत्तरयोः सत्वादन्तर्लापित्वम् । शैलराजसुतादयित इत्युत्तरम् । अत्र पञ्च प्रश्नविशेषणभूताः । तैर्युक्तः क इति प्रश्नार्थः । कायिनतः देहिभिर्नत इति । अस्योद्धारः— आद्यावन्ते.......नवोत्तरम् ॥(P. 152. see com)श्लोकान्तरं— हेळिमहा० " च.

इदमार्यावृत्तम्* ।

[1]अथ रथबन्धः— हेळिमहा इति । इदमार्यावृत्तम् । श्लोके एव प्रश्नोत्तरयोः सत्त्वादन्तर्लापिश्लोकोऽयम् । उत्तरं तु हेमभूधरशरासनः इति । अत्र सप्त विशेषणानि । तैर्युक्तः क इति प्रश्नार्थः । तत्र हेमभूधरशरासन इत्युत्तरम् । अस्योद्धारः—

आदावन्ते चैककोष्ठं मध्ये सप्त च पङ्क्तयः ।
त्रिपञ्चसप्तनवकसप्तपञ्चत्रिकोष्ठकाः ॥
चत्वारिंशत्कोष्ठकेषु सैकेषु विलिखेत् क्रमात् ।
आर्यावर्णास्तावतस्तु मध्ये वर्णा नवोत्तरम् ॥

[2]अर्धपादारोहावरोहस्य प्रश्नश्लोकः—

प्रार्थ्याः के क्क वितष्ठतेऽसुहरता सम्बुद्धिशब्दो रिपौ
कीदृक् कीदृगनीकभूर्मधुरिपोर्वक्षःस्थली कीदृशी ।
कीदृक् स्याज्जगतीतले पितृवनं कीदृक् ततिर्वादिनां
वापी कीदृगगाधवारिसहिता कीदृक्छरच्छर्वरी ॥ १७ ॥

[3]अथास्योत्तरश्लोकः—

---

* इतः परं गपाठो नास्ति ।

---

१. 'वृत्तम् । श्लोके एव प्रश्नोत्तरयोः सत्त्वादन्तर्लापि । उत्तरं तु हेमभूधरशरासन इति । अत्र सप्त विशेषणानि । तैर्युक्तः क इति प्रश्नार्थः । हेमभूधरशरासन इत्युत्तरम् । अस्योद्धारः– 'आदावन्ते ....... नवोत्तरम् ॥ ' (sea com)अथार्धपादा ' घ

२. 'अर्धपादावरोहस्य ' ख. च. ३. 'अथास्य चित्रश्लोकः ' ख, 'अथ चित्रश्लोकः ' ग. ङ.

सु ता ग रे ऽरे ग ता सु मा न वा[1] शि शि वा न मा ।
प ला दि का का दि ला प भा सु रा शि शि रा सु भा ॥

पदविभागस्तु[2]— सुताः, गरे, अरे, गतासुमानवाशिशिवा[3], अनमा, पलादिकाकादि, लापभासुरा, शिशिरा, सुभा[4] ॥

अथार्धपादारोहावरोहाख्यं चित्रम् । आदौ तस्य प्रश्नश्लोकः- प्रार्थ्याः क इति । अत्र श्लोके नव प्रश्नाः । तेषां चित्रश्लोके सुता इत्यादि नव उत्तराणि । आनुलोम्येन पठितानां चतुर्णां प्रातिलोम्येन पठने पादपूर्तिः स्यात् । यथा- सुता गरेऽरे गतासु इति । उपरितनपादत्रयेऽप्येवमेव द्रष्टव्यम् । सुबोधार्थं चित्रश्लोकपदानि लिख्यन्ते- सुता, गरे, अरे, गतासुमानवाशि-शिवा, पलादिकाकादि, लापभासुरा, शिशिरा, सुभा ॥

अथ पादारोहावरोहस्य प्रश्नश्लोकः[5]—

कीदृग्धन्विघटा[6] रणे पुरभिदः का वल्लभा कर्मणः
कः कर्ता विकृताकृतिश्च विततिः क्रव्याशिनां[7] कीदृशी ।
गङ्गा कीदृगपां निधेश्च तनया क्वास्ते कया राजते
रत्नं तिष्ठति शारदा क्व च पुनः केनाङ्गमाच्छाद्यते[8] ॥ १९ ॥

अथ पादारोहावरोहस्योत्तरश्लोकः[9]—

---

१. 'वा शशि' घ. २. 'भागः' ख. ङ.
३. 'वाशशि' घ. ४. 'सुभा ॥ एतानि पदानि प्रश्नैर्यथा-संख्यं योजनीयानि ॥ अथ पादा' ख. ५. 'पादावरोहस्य प्रश्नः' ख च.
६. 'कीदृक् चण्डरतौ वधूः पुर' ख. च. ७. 'व्यादिनां' ख.
८. 'ते ॥ कीदृक्षा रणरङ्गके इति पाठान्तरत् ॥ अथ' च.
९. 'अथ पादावरोहः' ख, 'अथ पादारोहावरोहः' घ, 'अथ पादावरोह-स्योत्तरश्लोकः' च, 'अथास्योत्तरश्लोकः' ङ.

का[1] य दा र द ना ळी का का ळी ना द र दा[2] य का ।
सा स वा व न जे चा रु रु चा जे न व वा स सा ॥ २० ॥

प[3]दविभागस्तु—

का[4]यदारदनाळीका, काळी, ना, दरदा[5]यका, सासवा, वनजे, चारुरुचा, अजे, नववासस[6]ा ॥

अथ पादारोहावरोहस्य प्रश्नश्लोकः— कीदृगिति । अत्र श्लोके नव प्रश्नाः । तेषां चित्रश्लोके कायदारदनालीका इत्यादीनि नव पदानि यथाक्रममुत्तराणि । तानि तु– कायदारदनाळीका, काळी, ना, दरदायका, सासवा, वनजे, चारुरुचा, अजे, नववाससा । अत्र पादस्य आरोहोऽवरोहश्च द्रष्टव्यः ॥

अथा[7]र्धारोहावरोहस्य प्रश्नश्लोकः—

कीदृङ्मूर्तिर्भीमसेनस्य कीदृक्
प्रौढा भर्त्री कीदृशी शम्भुसेवा ।
[8]सेनोदारा कीदृशी कोकिला स्यात्
कीदृक् चैत्रे मासि कीदृक् च नारी ॥ २१ ॥

---

१. ‘ कायि ’ घ. ङ. २. ‘ दायि ’ घ. ङ.

३. ‘ पदम् ’ ख. ४. ‘ कायि ’ घ. ङ. ५. ‘ दायि ’ घ. ङ.

६. ‘ सा ॥ एतानि पदानि पूर्ववद् योजनीयानि । अथा ’ ग, ‘ सा ॥ कायदारदनालीना इति च पाठान्तरम् । अथा ’ च.

७. ‘ थार्धावरोहप्रश्नः ’ ख, ‘ थार्धावरोहस्य प्रश्नश्लोकः ’ च.

८. ‘ केनोदारा ’ ख. च

अथास्योत्तरश्लोकः[1]—

सा ह सा न घ सा रा सा ला पा भू ह रि दा र दा ।
दा र दा रि ह भू पा ला सा रा सा घ न सा ह सा ॥२२॥

पदविभागस्तु[2]—

साहसानघसारा, सालापा, भूहरिदारदा, दारदारिहभूपाला, सारासा, घनसाहसा[3] ॥

अथार्धारोहावरोहाख्यचित्रस्य प्रश्नश्लोकः— कीदृङ्मूर्तिरिति । अत्र श्लोके षट् प्रश्नाः । तेषां चित्रश्लोके साहसानघसारेति षट् पदानि यथाक्रममुत्तराणि । तानि च- साहसानघसारा, सालापा, भूहरिदारदा; अस्यार्थः— भूर्भूमिः हरिदारा लक्ष्मीः, ते ददातीति तथोक्ता । दारदारिहभूपाला- दारं दारणं तद्ददतीति दारदाः । तादृशान् अरीन् हन्तीति दारदारिहा । तादृशो भूपालो यस्याः सा तथोक्ता । सारासा आरासससहिता । घनसाहसा । इदमारोहेण पठितं पूर्वार्धम् । अवरोहेणोत्तरार्धम् ॥

अथ श्लोकारोहावरोहौ[4][5]—

तत्र आरोहस्य प्रश्नश्लोकः[6]—

का गन्धग्रहणं करोति रजनी कीदृक् सुखं रागिणां[7]
कुर्यात् का तिमिरं निहन्ति भुवि का जागर्ति का कार्मुके ।

---

१. 'अथोत्तरश्लोकः' ख. च, 'अथ चित्रश्लोकः' घ.
२. 'पदम्' ख.
३. 'सा ॥ सर्वं पूर्ववत् । अथ' घ.
४. 'श्लोकावरोहः' ख.
५. 'हः' घ.
६. 'हश्लोकस्य प्रश्नश्लोकः' ख. घ. ङ.
७. 'णः' च.

वामाक्षीकबरी च कीदृगळिनां कायेषु को वर्तते
कीदृक् चारुतरा पुरी च सरसी कीदृक् शरद्वासरे ॥ २३ ॥

अथारोह[1]स्योत्तरश्लोकः—

ना सि का त त भा रा मा भा जी वा घ न दा म का ।
का ळि मा व न जा भा भू वा पी सा र स मा लि नी ॥ २४ ॥

प[2]दवि[3]भागस्तु—

नासिका, ततभा, रामा, भाः, जीवा, घनदामका, काळिमा, वनजाभाभूवापी, सारसमालि[4]नी ॥

अथावरो[5]हस्य प्रश्नश्लोकः—

आस्ते को जलदे ततिस्सुमनसां कीदृग्घृतप्राशिनां
कायः कीदृगधोक्षजेन धरणीभारो हृतः कीदृशा ।
का मृद्वी भुवि कीदृशी सुरगवी कीदृक् चमूर्भूभुजां
रत्याः काभिमतापगाभ्रसमये कीदृक्छिदा केन वा ॥ २५ ॥

अथावरो[6]हस्योत्तरश्लोकः—

नी लि मा स र सा पी वा भू भा जा न व मा लि का ।
का म दा न घ वा जी भा मा रा भा त त का सि ना ॥ २६ ॥

---

१. 'हस्योत्तरम्' ख, 'हश्लोकः' ब. २. 'पदम्' ख.
३. 'भागः' घ. ङ. ४. 'नी । सर्वं पूर्ववत् ॥ अथा' घ.
५. 'हश्लोकस्य प्रश्नः' ख, 'हश्लोकस्य प्रश्नश्लोकः' ग.
६. 'हश्लोकः' खं. ग. ङ.

पदविभागस्तु[1]—

नीलिमा, सरसा, पीवा, भूभाजा, नवमालिका, कामदा, अनघवाजीभा, मारामा, ततका, असिना[2] ।।

अथ श्लोकारोहावरोहौ— तत्र आरोहस्य प्रश्नश्लोकः । **का गन्धग्रहणमित्यादि** । अत्र श्लोके नव प्रश्नाः । चित्रश्लोके च नव पदान्युत्तराणि । तानि च— नासिका, ततभा, रामा, भाः, जीवा, घनदामका, कालिमा, वनजाभाभूवापी— वनजाभानां भुवः स्थानानि वाप्यो यस्यां सा तथोक्ता । सारसमालिनी, स्पष्टार्था ।

अथावरोहस्य प्रश्नश्लोकः— **आस्ते को जलद** इति । अत्र श्लोके दश प्रश्नाः । तेषां चित्रश्लोके दशपदानि यथाक्रममुत्तराणि । तानि तु— नीलिमा, सरसा, पीवा, भूभाजा, नवमालिका, कामदा, अनघवाजीभा, मारामा, ततका, असिना । एतानि दशप्रश्नानां यथाक्रममुत्तराणि ।।

**अथ पादैकाक्षरस्य[3] प्रश्नश्लोकः**

**सृष्टं केन जगत् सुरेण न सुखं सम्प्राप्यते केन वा**
**नो कास्ते चिकुरैः[4] क्व चूतविततिः कीदृक् च कास्योद्भवा ।**
**कीदृक्षौ बलभद्रकंसमथनौ[5] बाल्ये बलायुक्तता**
**[6]क्वौघे क्व सुखं झषस्य च पदं किं वोपमावाचकम् ।। २७ ।।**

---

१. 'पदम्–' ख, 'पदविभागः' ङ. २. 'ना ।। सर्वं पूर्ववत् । अथ' ग. ३. 'पादैकाक्षरश्लोकस्य प्रश्न' ख, पदाक्षरश्लोकस्य प्रश्नः–' ग. ङ. ४. नकास्ते चिकुराः क्व' ख. ग, 'नन्वास्ते कुरवः क्व' च. ५. 'राः क्व' ङ. ६. 'क्वौघे वा क्व' ग. ङ.

का वाक् सन्निहितश्रियः स्मरहरं कं पालयेतीरये-
द्भक्तः कां तिथिमिन्दुरेत्य न भवेद् दृश्यः सुताद्रेश्च का[1]॥२९॥

अथार्धैकाक्षर[2]स्योत्तरश्लोकः—

रुरो रुरु र रे[3] रूरु र री रे रु रु रो र री ।
[4]मा मा म मा मा मा मे मी मा म मा मा म मा मु मा ॥३०॥

पदविभाग[5]स्तु—

रुरोः, उरुः, अरेः, ऊरुः, [6]अरीरे, अरुः, [7]उरौररी, मा [8]मा मम अमा माम् एमि इमाम् अमा, माम्, अमाम्, उ[9]मा ॥

अथार्धैकाक्षरश्लोकस्य प्रश्नश्लोकः— कस्योदारेति । अत्रैकादश प्रश्नाः । तत्र कस्योदारजवोऽस्तीत्यादीनामादौ सप्तप्रश्नानां चित्रश्लोके रुरोरित्यादीनि सप्त पदान्युत्तराणि । अष्टमस्य 'का वाक् सन्निहितश्रिय' इति प्रश्नस्य यद्यपि बहूनि पदान्युत्तराणि तथापि तेषां वाक्त्वेन क्रोडीकारात् । सन्निहिता उपस्थिता श्रीर्यस्य तस्य पुरुषस्य वाक् कीदृशीत्यर्थः । अस्य प्रश्नस्य चित्रश्लोकस्थिता बहुपदात्मिका वागुत्तरम् । तानि कानीति चेदाह— मा मा मम अमा माम् एमि इमाम् अमा इति । अर्थस्तु अ म अलक्ष्मीर्मम मा मा । अमा समीपे इमाम् एनाम् मां लक्ष्मीम् एमि श्रयामि । एवंरूपा वागष्टमस्योत्तरं भवति । भक्तः स्मरहरं कं पालयेतीरयेदिति प्रश्नस्य

---

१. 'हरः कं पालयेद् भक्तपो भक्तं कां' च.  २. 'रश्लोकः–' ख. ग. ङ.
३. 'र रि रे' च.  ४. 'मा मो मा मा मि मा मे मी' च.
५. 'गः–' ख. ग. ङ.  ६. 'अरिरे' च.  ७. 'उरः ररी' च.
८. 'मः अम माम् इमाम् एमि' च.  ९. 'मा ॥ सर्वं पूर्ववत् । अथै' ग.

मामित्युत्तरम् । इन्दुः कां तिथिमेत्य न दृश्यो भवतीति प्रश्नस्य अमाम् इत्युत्तरम् । अन्यत् सुबोधम् ॥

अथैकाक्षरस्य[1] प्रश्नश्लोकः—

कीदृग्दुष्प्रभुभूस्सुगायकघटा कीदृक् च कार्तस्य वाग्
भेदे किञ्च पदं स्थले सति जले काथार्थकं किं पदम् ।
कीदृग् रात्रिरिनोदयेऽतितुदतः सम्बोधनं किं च के
शब्दास्तत्त्वविकल्पहेत्वधिगतत्वश्रेणिकावाचकाः ॥ ३१ ॥

अथैकाक्षरस्योत्तरश्लोकः[2]—

त ते ति तौ ता त्त त ता ता त ता ते ति तू त्त ता ।
त तो ती ता ति तु त्ते त त त्तो ते ती त ता त तिः ॥३२॥

पदविभागस्तु[3] –

ततेतितौता, आत्तता, तात तात इति, तु, उत्तता, ततः, अतीता, अतितुत्तेत, तत्ता, उत, इति, इतता, ततिः[4] ॥

अथैकाक्षरस्य प्रश्नश्लोकः— कीग्दुष्प्रभुभूरिति । अत्र त्रयोदश प्रश्नाः । तेषां चित्रश्लोके क्रमेणोत्तराणि । चित्रश्लोकस्तु– ततेतितौतेत्यादि । पदविभागस्तु– ततेतितौता, आत्तता, तात तात इति, तु, उत्तता, ततः, अतीता, अतितुत्तेत, तत्ता, उत, इति, इतता, ततिः । कीदृग् दुष्प्रभुभूरिति

---

१. ' श्लोकस्य प्रश्नः ' ख., ' श्लोकस्य प्रश्न ' ग. ङ.
२. ' श्लोकः ' ख. ग. ङ.    ३. ' गः– ' ग.
४. तिः ॥ सर्वं पूर्ववत् । अथ ' ग.

प्रश्नस्य ततेतितौतेत्युत्तरम् । विस्तृतेतित्वप्रोता । द्वितीयस्य आततततेति । आत्तवीणादिवाद्या । आर्तवाक् केति प्रश्नस्य तात तातेति । भेदे किं पदमिति प्रश्नस्य तु इत्युत्तरम् । जले सति स्थले केति प्रश्नस्य उत्तता सिक्तता । अथार्थकं पदं किमिति प्रश्नस्य ततः इति । इनोदये सति रात्रिः कीदृगिति प्रश्नस्य अतीतेति । अतिशयेन तुदतः सम्बोधनं किमिति प्रश्नस्य अतितुत्तेत ! अतितुत्तया इत ! । तत्त्वादिवाचकशब्दाः के इति प्रश्नस्य तत्ता, उत, इति, इतता, ततिः इत्येतानि पदानि तत्त्वादीनां पञ्चानां क्रमेणोत्तराणि ॥

अथ द्व्यक्षरस्य[1] प्रश्नश्लोकः—

कीदृक् स्यान्मनुजो[2]ऽसिदारिततनुः कीदृक् शरत्[3] कीदृशः
क्षीराब्धेर्मथनं चकार मधुजित् का मानुषैकास्पदम् ।
कीदृग्योधकदम्बकं च दिवसो निस्तोयदः कीदृशः
कीदृक् प्रीतिभरं व्यधत्त हृदये का वा प्रलम्बद्विषः ॥ ३१ ॥

अथ द्व्यक्षरश्लोकः[4]—

सा स्त्र स्स सा र सा रा स स र सी स सु रा सु रः ।
र सा सा सि स सू रो स्त्र स्सा र सा र र सा सु रा ॥३२॥

पदविभागस्तु[5]—

सास्त्रः, ससारसारासररसी, ससुरासुरः, रसा, सासि, ससूरोस्त्रः,

---

१. 'रश्लोकस्य प्रश्नः–' ख, 'रश्लोकस्य प्रश्नश्लोकः–' क. ग. ङ.
२. 'स्यान्नयनामयी शरदतौ वन्या भवेत् कीदृशी कीदृक् क्षीरसमुद्रमन्थनमयः काधारभूता रणम् । कीदृग् वर्षणपूतलोकनिचयः स्यात् तोयदः कीदृशः कीदृक् प्रीतिभरं' च.
३. 'शारः कीदृशः' ग. ङ.
४. 'रस्योत्तरश्लोकः' ख.
५. 'पदम्' ख, 'पदविभागः' ग. ङ.

सारसाररसा, सुरा ॥*

अथ द्व्यक्षरस्य प्रश्नश्लोकः— कीदृक् स्यादिति । अत्राष्टौ प्रश्नाः । तेषां चित्रश्लोकस्थितानि अष्टौ पदान्युत्तराणि । चित्रश्लोकः पदरूपेण लिख्यते- सास्रः, ससारसाराससरसी, ससुरासुरः, रसा, सासि, ससूरोस्रः, सारसाररसा, सुरा ॥

§अथ गूढचतुर्थस्य प्रश्नश्लोकः—

कस्मिन् रूपं को विरुन्ध्यान्नृपः किं
रक्षेद्भिन्द्यात् कः क्व पद्मानि दूरम् ।
सादी गच्छेत् केन शौरिस्थितिः क्व
क्ष्मां पायात् कः कीदृशश्चन्द्रमौलिः ॥ ३३ ॥

अथ गूढचतुर्थस्योत्तरश्लोकः—[2]

द र्प के वि म तो रा ज्यं बा णः स र सि वा जि ना ।
घो ष सी म नि भू पा लः स र्प रा जि वि भू ष णः ॥ ३४ ॥

स्पष्टः पदविभागः‡ ॥

+अथ निरोष्ठ्यस्य प्रश्नश्लोकः—[3]

---

* द्व्यक्षरानन्तरं ख. ङ च पाठेषु श्रृङ्खलाबन्धो दृश्यते ।
§ गपाठे गूढचतुर्थो नास्ति ।
‡ एतदनन्तरं कपाठे तुल्याख्यातं दृश्यते ॥
\+ कपाठे 'निरोष्ठ्यं' नास्ति । गपाठे तु तुल्याख्यातानन्तरं वर्तते ।

---

१. 'रा ॥ सर्वं पूर्ववत् । अथ तुल्याख्यातम ।' (P. 163.) ग.
२. 'तुर्थः' क.   ३. 'श्नः–' ख

शम्भुः कीदृक् को निहन्तासुराणां
विष्णोर्नाभीपुण्डरीकादभूत् कः ।
भूषा रात्रेः को निधिस्तेजसां को
वर्षेत् कः को वैरिसेनां निरुन्धे ॥ ३५ ॥

अथ निरोष्ठ्यस्योत्तरश्लोकः[1]—

हारनीहारनीकाशकायश्रीर्नळिनेक्षणः ।
शारदादयितश्चन्द्रस्तरणिर्जलदः करी[2] ॥ ३६ ॥

अथ निरोष्ठ्यस्य प्रश्नश्लोकः— शम्भुरिति । पदरूपेण चित्रश्लोको विलिख्यते— हारनीहारनीकाशकायश्रीः, नळिनेक्षणः, शारदादयितः, चन्द्रः, तरणिः, जलदः, करी । अत्र सप्तप्रश्नानां शम्भुरित्यादीनामुत्तराण्युक्तानि ॥

अथ तुल्याख्यातम्—

प्रश्नोत्तरं तिङन्तं यत् तुल्यरूपं भवेद्यदि ।
आरोहे चावरोहे च तुल्याख्यातं तदुच्यते ॥ ३७ ॥

तद् यथा—

किमाचरति वीरोऽरीन् रणे दृष्ट्वा विशस्त्रिणः ।
प्रतिलोमानुलोमाभ्यां तुल्यरूपमिहोत्तरम् ॥ ३८ ॥

॥ तिष्ठति ॥ १ ॥

अथ तुल्याख्यातं नाम चित्रम्— प्रश्नोत्तरमित्यादि । तद् यथा—

---

१. 'ष्ठ्यश्लोकः' ख. ङ.  २. 'री ॥ स्पष्टोऽर्थः । प्रश्नोत्तरं॰' ङ.

किमाचरतीत्यादि । तस्य प्रश्नस्यारोहेऽवरोहे च तुल्यरूपं तिष्ठतीति पदमुत्तरम् ॥

बाणः प्रयुज्यते वीरैर्विमते किं करोत्विति ।
प्रतिलोमानु० ॥ ३९ ॥

॥ तुदतु ॥ २ ॥

बाण इति प्रश्नस्य तुदत्वित्युत्तरम् ॥

स्वर्गेच्छा चेज्जना धर्ममित्यत्र खलु का क्रिया ।
प्रतिलोमानु० ॥ ४० ॥

॥ तनुत ॥ ३ ॥

स्वर्गेच्छेति प्रश्नस्य तनुतेत्युत्तरम् ॥

किमूचे सन्धये पार्थैर्यतस्वेतीरितो हरिः ।
प्रतिलोमानु० ॥ ४१ ॥

॥ यतेय ॥ ४ ॥

किमिति । अत्र यतेयेत्युत्तरम् ॥

किं वचो जपतः पुंसः सिद्ध्यन्तं स्वमनुं प्रति ।
प्रतिलोमानु० ॥ ४२ ॥

॥ सिद्ध्यसि ॥ ५ ॥

किं वच इति । अत्र सिद्ध्यसीत्युत्तरम् ॥

जनो वदेत् किं तटिनीप्रवाहं[1] तर्तुमिच्छतः ।
प्रतिलोमानु० ॥ ४३ ॥

॥ तरत ॥ ६ ॥

जन इति । अत्र तरतेत्युत्तरम् ॥

गुरुणोक्ते यजस्वेति स्वर्गार्थी किं वदेद् द्विजः ।
प्रतिलोमानु० ॥ ४४ ॥

॥ यजेय ॥ ७ ॥

गुरुणेति । अत्र यजेयेत्युत्तरम् ॥

वाक्ये क्रिया का शिवयोरावां भक्ताशयेष्विति ।
प्रतिलोमानु० ॥ ४५ ॥

॥ वसाव ॥ ८ ॥

वाक्य इति । अत्र वसाव इति ॥

कल्पान्ते द्वादशादित्यान् किं ब्रूयात् परमेश्वरः ।
प्रतिलोमानु० ॥ ४६ ॥

॥ तपत ॥ ९ ॥

कल्पान्त इति । अत्र तपतेत्युत्तरम् ॥

कथां वदतमित्युक्तौ शिवौ स्कन्दं किमूचतुः ।
प्रतिलोमानु० ॥ ४७ ॥

---

१. ‘ तटिनीं नरान् सन्तर्तुमिच्छतः ’ ग.

॥ वदाव* ॥ १० ॥

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्बा चाजनयत् सतीजननुता यं मानितं सज्जनैः ।
षष्ठोऽजायत तत्कृताविह परिच्छेदो हि भीमात्मजा-
कल्याणावरजे मनोहरतरश्रीचित्ररत्नाकरे ॥ ४८ ॥

‡ दृप्यन्मन्मथगाढकर्षणदलत्पर्वेक्षुचापक्षरत्-
सारस्फाररसोर्मिनिर्मितरणक्रीडा यदीया गिरः ।
यत्कीर्तिः शरदिन्दुसुन्दरमहःसन्दोहसन्देहदा
सोऽयं चक्रकविर्विभाति विनयी सौजन्यसम्पन्निधिः ॥४९॥

समाप्तश्चित्ररत्नाकरः ॥

---

इति सेनापतिविरचितायां चित्ररत्नाकरव्याख्यायां
शरच्चन्द्रिकायां षष्ठः परिच्छेदः ।
॥ समाप्तश्चायं ग्रन्थः ॥

---

* अतः परं खपाठे ' इति चित्ररत्नाकरे षष्ठः परिच्छेदः । अष्टादशपद्म-बन्धप्रश्नः– आस्ते को भुवि० (see page 149) इति दृश्यते, गपाठे ' वदावे '-त्यनन्तर ' किमाचरति० ' (see page 163) दृश्यते । ततः– ' निरोष्ठ्यं–

नीहारहारनीकाशकायश्चन्द्रकलाधरः ।
नीलकण्ठः कालहन्ता रक्षिता नः सदा हरः ॥
त्रिपुरारिमहं वन्दे वाचाथ मदनद्विषम् ।
सोऽपि शं सहसानीयादर्धनारीश्वरो विभुः ॥(?) पुत्रं चक्र० ' इति च दृश्यते ।

‡ श्लोकोऽयं कपाठे नास्ति ॥

## १. सर्वतोभद्रबन्धः । [P. No. 142]

वरा ह्वा वाह्राव राजता ननताजरा ।
हतारि काकारिताह्वानका रुरुका नवा ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| व | रा | ह्व | वा | वा | ह्व | रा | व |
| रा | ज | ता | न | न | ता | ज | रा |
| ह्व | ता | रि | का | का | रि | ता | ह्व |
| वा | न | का | रु | रु | का | न | वा |
| वा | न | का | रु | रु | का | न | वा |
| ह्व | ता | रि | का | का | रि | ता | ह्व |
| रा | ज | ता | न | न | ता | ज | रा |
| व | रा | ह्व | वा | वा | ह्व | रा | व |

## २. कविकाव्यनामचक्रबन्धः । [ P. No. 144 ]

कल्याणाचलरोचिरन्तकसपत्नाशास्त्रविद्याश्रिया
दृप्यच्चक्रममित्रबाधकपृषत्कव्यूहकृत्त्वार्जुनि ।
पद्माक्षे कचभारशोभि कमनोरः पद्धतिः कोकिला
लाक्षाश्रीकघना दृढद्विपमुखायातध्वनिद्योतला ॥



## ३. मुरजबन्धः । [ P. No. 145 ]

सेनासारजसारश्री-
घना साधुरसारसा ।
सारसाररसायुक्त-
भी रसा रजसा युता ॥



## ४. गोमूत्रिकाबन्धः । [ P. No. 147 ]

धराधरसुतानेता
　　क्षीराब्धितनयापतिः ।
सुरासुरनता माता
　　हारा गतभया रतिः ॥

ध रा ध र सु ता ने ता क्षी रा ब्धि त न या प तिः
सु रा सु र न ता मा ता हा रा ग त भ या र तिः

## ५. अर्धभ्रमकबन्धः । [ P. No. 148 ]

मेघराजिनिभा नाग-
घटाजितजनासिना ।
राजितायातासनाभा
जितया साजितजनि ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मे | घ | रा | जि | नि | भा | ना | ग |
| घ | टा | जि | त | ज | ना | सि | ना |
| रा | जि | ता | या | ता | स | ना | भा |
| जि | त | या | सा | जि | ता | ज | नि |

## ६. अष्टदलपद्मबन्धः । [ P. No. 149 .]

ना कोकस्तोमरक्षी कृतबहुळतरक्षेमभक्त्या सगाना
नागासक्त्या भमक्षे निखिलजनुतत्यागवत्या ससेना ।
नासे सत्यावगत्या वितरणसफलश्रीघनक्ष्मापलीना
नाळी पक्ष्मानघश्रीरधिकरसयुतक्षीरमस्तोककोना ॥



## ७. रथबन्धः । [P. No. 151]

हेळिमहाधृतभूतिः
कोऽमळबोधप्रदो दयाजळधिः ।
रतिपतिदमनो विशद-
स्मितभूर्धीराञ्चितोल्लसद्ध्यानः ॥



# श्लोकानुक्रमणी

## IN THE PRESS

1. Bhojanakutūhala (Dietetic.) of Raghunātha. Part. II.
2. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhoja with the commentary Hṛdayahāriṇī by Daṇḍanāthanārāyaṇa Part. V.
3. Prakriyāsarvasva (Grammar) by Nārāyaṇa Bhaṭṭa. Part. V.
4. Mīmāṁsāślokavārtika of Kumārilabhaṭṭa with the commentary Kāśikā by Sucaritamiśra. Part. IV.
5. Aṅkaṇaśāstra (Jyotiṣa).
6. Twenty Prabandhas (Campus) of Nārāyaṇa Bhaṭṭa.
7. Aitareyāraṇyaka (Veda) with the commentary Mokṣapradā of Ṣaḍguruśiṣya
8. Santānagopālaprabandha.
9. Śrīcihnakāvya by Śrīkṛṣṇalīlāśuka.
10. Praśnāyana by Puruṣottama
11. Vasulakṣmīkalyāṇam (Drama)

## READY FOR THE PRESS

1. Kalaśacandrikā (Tantra).
2. Śukasandeśa of Lakṣmīdāsa with the commentaries Vilāsinī of Mānaveda and Cintātilakam by Gaurīdāsa.